Digitized By Siddhanta eGangotri Gyaan Kosha

मास्टर मणिमालायाः ५९ संख्यको मणिः ( ज्यौ० वि० १६० )

श्रीगणेशदैवज्ञविरचितः—

# जातकालङ्कारः

संयुक्तिकसंस्कृतभाषाटीकासहितः

टीकाकारः—

पं० श्रीसीताराम झा, ज्यौ० आ०

प्रकाशकः—

...लाल ऐण्ड सन्स, काशी ।

मूल्य .७२

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


श्री गणेशदैवज्ञविरचितः—

# जातकालङ्कारः ।

पण्डितहरभानुकृतसंस्कृतटीकासहितः ।

दरभङ्गामण्डलान्तर्गत–चौगमानिवासि–काशीस्थ–
संन्यासिसंस्कृतमहाविद्यालयप्रधानाध्यापक–
ज्यौतिषाचार्य–तीर्थ–
पण्डितश्रीसीतारामशर्मकृत-
भाषाटीकासहितः ।

तेनैव संशोधितश्च ।

अयं च
मास्टर खेलाड़ीलाल ऐण्ड सन्स
महोदयैः
'मास्टर प्रिण्टिङ्ग वर्क्स' नाम्नि मुद्रणागारे मुद्रापयित्वा
प्रकाशितः ।

भारतीय संस्कृत भवन

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

# समर्पणम्

भास्टरमणिमालायाः क्रमतो नवशरमितो मणिर्जातः ।
ज्यौतिषशास्त्रविभागे षोडश एवेति नतशिरसा ।
श्रीविश्वेशपदेभ्यः सादरमादौ समर्प्यते भक्त्या ।
तत्पदपङ्कजसेवनलब्धसुखेन प्रकाशकेन मया ॥

मूल्यम् ०-७२

सर्वाधिकारः प्रकाशकेन सुरक्षितः ।

सन् १९६२ ई०

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

# ❋ भूमिका ❋

"अप्रत्यक्षाणि शास्त्राणि विवादस्तेषु केवलम् ।
प्रत्यक्षं ज्यौतिषं शास्त्रं चन्द्रार्कौ यत्र साक्षिणौ ॥"

तथा च—"ललाटपट्टे लिखिता विधात्रा षष्ठीदिने याऽक्षरमालिका च ।
तां जन्मपत्री प्रकटीकरोति दीपो यथा वस्तु घनान्धकारे ॥"

इत्यादि ज्यौतिषशास्त्रानुसार मुन्युक्त अदृष्टफलकथन की सत्यता में आजकल भी कुछ प्रमाण है तो समस्त फलित ग्रन्थालङ्कारभूत एक जातकालङ्कार ही है। वास्तव में "यथा नाम तथा गुणः" यह प्राचीनोक्ति भी इसी ग्रन्थ में चरितार्थ होती है। ऐसी गिरी हुई दशा में भी लोग केवल इसी ग्रन्थ बल से दैवज्ञ कहलाते हैं। यद्यपि इस विषय को मैं भी जानता हूँ कि आबाल वृद्ध सर्वत्र प्रसिद्ध दैवज्ञ कण्ठस्थहार इस जातकालङ्कार का गुरुकथनपूर्वक परिचय कराना हाथ में दीपक लेकर जगत्प्रकाशक श्रीसूर्य भगवान् को दिखाने के समान है तथापि बालकों के लिये कुछ लिख देना उचित समझता हूँ।

इस कराल कलिकाल का प्रभाव ज्यों ज्यों बढ़ता जाता है त्यों २ लोगों की बुद्धि भी मोटी होती जाती है ऐसी अवस्था में समस्त शास्त्र पढ़ लेने पर भी तत्त्व समझना कठिन है। अतएव सर्वजनोपकाराय माननीय 'गणेशदैवज्ञ' ने न जाने कितने परिश्रम से समस्त-जातकशास्त्र का सार भार लेकर सरल संस्कृत मनोहर पद्यों में तन्वादि-द्वादश भावों का फल, आयुर्दाय विचार इत्यादि उपयोगी विषयों को स्पष्ट रूप से इस ग्रन्थ में लिख दिये हैं। एकमात्र इस ग्रन्थ को कण्ठस्थ कर लेने से जन्मपत्रानुसार फल कहने में दूसरे ग्रन्थ का प्रयोजन नहीं हो सकता। विशेष गुण तो यह भी है कि यह अन्य (केशवी बृहज्जातक... आदि) जातक ग्रन्थों की अपेक्षा अत्यन्त सरल है। उस पर भी जो कुछ कठिनतायें थीं उनको पं० हरभानुजी ने अपनी सरल संस्कृत टीका से स्पष्ट कर दिया है। ऐसा होने पर भी थोड़े संस्कृत जानने वालों के उपकारार्थ बा० बैजनाथ प्रसाद यादव के कथनानुसार मैंने सरल हिन्दी में तात्पर्यार्थ लिखकर उक्त महानुभाव को ही प्रकाशन आदि करने का सर्वाधिकार दे दिया है। यदि इससे सज्जन-समाज कुछ भी उपकृत होंगे तो मेरा प्रयत्न सफल होगा।

अथार्योऽस्मामार्याभिज्ञान् विज्ञापयामि
यन्मम दृग्दोषाद्वा मुद्रणयन्त्रादशुद्धमिह जातम् ।
संशोध्यं तदखिलमिति साञ्जलिरभ्यर्थयेऽभिज्ञान् ॥
मिथिलादेशान्तर्गत-दरभङ्गासन्न-चौगमावासी ।
बछरनशर्मतनूजो ह्यनुजो रामप्रसादविदुषोऽहम् ॥—श्रीसीताराम झा।

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

# अथ जातकालङ्कारविषय-सूची।



CC-0. Prof. Satya Vrat Shastri Collection.

❀ इति ❀

Digitized By Siddhanta eGangotri Gyaan Kosha

॥ श्रीगणेशाय नमः ॥

अथ

# जातकालङ्कारः

वस्वर्णं ब्रह्मविद्यापरिचयचतुरं श्रीशुकं व्यासपुत्रं
नत्वाऽऽचार्यं मुनीनां हरिपदकमले प्रेमविश्रामभाजाम् ।
स्विष्टेष्टं स्वेष्टदेवं श्रुतिसमधिगतं माधवं भावयित्वा
भावैरुद्भाव्यतेऽस्मै प्रवरमतिमुदे जातकालङ्कृतिश्रीः ॥१॥

अथ ज्योतिर्विंत्तिलकः छन्दोलङ्कृतिकाव्यरचनानिपुणः श्रीगणेशकविः श्रीशुकजातकानुरोधिजातकालङ्कारनामकग्रन्थं चिकीर्षुस्तदादौ निर्विघ्नपरिसमाप्त्यर्थं शिष्टाचारक्रमगतं भगवद्विभूतिगुरुगणेशभारतीकर्मप्रणिपातपरं वस्तुनिर्देशात्मकं मङ्गलमाचरति द्वाभ्यां शार्दूलविक्रीडिताभ्याम्—

सानन्दं प्रणिपत्य सिद्धिसदनं लम्बोदरं भारतीं
सूर्यादिग्रहमण्डलं निजगुरुं भक्त्या हृदब्जे स्थितम् ।
येषामङ्घ्रिसरोरुहस्मरणतो नानाविधाः सिद्धयः
सिद्धिं यान्ति लघु प्रयान्ति विलयं प्रत्यूहशैलव्रजाः ॥१॥

सद्भावाकलितं पदार्थललितं योगाङ्गलीलार्चितं
श्रीमद्भागवतं शुकास्यगलितं यच्छ्रीधरस्वामिना ।
सुव्यक्तं क्रियते गणेशकविना गाथोक्ति तज्जातकं
वृत्तस्रग्धरया जनादिसुफलं ज्योतिर्विदां जीवनम् ॥२॥

सानन्दमिति । सद्भावाकलितमिति च । गणेशनाम्ना ग्रन्थकरणकुशलेन मया । तज्जातकं वृत्तस्रग्धरया सुव्यक्तं क्रियते=स्पष्टार्थं यथा स्यात्तथा विधीयते, इत्यर्थः । किं कृत्वा ? भक्त्या तान् सिद्धिसदनभूतान नत्वा

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


=नमस्कृत्य। तान् किं विधान्? येषामङ्घ्रिसरोरुहस्मरणतः नानाविधाः=अनेकविधाः सिद्धयः=कार्यसिद्धयः सिद्धिं=पूर्णतां यान्ति प्रत्यूहशैलव्रजाः=विघ्नपर्वतसमूहाः 'विघ्नोऽन्तरायः प्रत्यूह' इत्यमरः 'व्रजा गोष्ठाध्ववृन्देषु' इत्यमरः। लघु=शीघ्रं विलयं यान्ति=नश्यन्ति 'लघु क्षिप्रमरं द्रुतमि' त्यमरः। लघ्विति पदं शीघ्रतावाचकं देहलीदीपकन्यायेनोभयत्रान्वेति। तान्कान्? तदाह–सिद्धिसदनं=सिद्धिर्लक्ष्मीः तस्याः सदनं गृहं निवासस्थानमिति यावत्, श्रीनिवास इत्यर्थः 'त्वं सिद्धिस्त्वं स्वधा स्वाहेत्यादि' लक्ष्मीस्तुत्यारम्भे सिद्धिशब्दस्य लक्ष्म्यां प्रयुक्तत्वात् सिद्धिर्लक्ष्मीरिति नित्यविकल्पोऽर्थः। कीदृशं सिद्धिसदनं? सानन्दं =आनन्देन सहितं ब्रह्मण आनन्दः 'आनन्दं ब्रह्मणो विद्वानिति' श्रुतेः। सानन्दमिति विशेषणपदं भगवतोऽन्यत्र नोपपद्यते। ततोन्यदार्तवमिति श्रुत्या ब्रह्माणमित्यत्रार्तवोपदेशात् हृदब्जे स्थितं=हृदयकमलवासिनं 'सर्वस्य चाहं हृदि सन्निविष्ट' इति भगवद्वचनात्। भक्त्या=प्रीतिपूर्वकानुस्मृत्या, गुरुं=श्रीमच्छिवाख्यं, लम्बोदरं=विनायकं, भारतीं=सरस्वतीं सूर्यादिग्रहमण्डलं=रव्यादीनां ग्रहाणां मण्डलं समूहं च प्रणिपत्य=नमस्कृत्य, शुकास्यगलितं=शुकमुनिमुखात् भक्तिभूतं गलितं, गाथोक्ति=गाथानां श्लोकविधुराणां उक्तिर्व्याहारो यस्मिन् तथाभूतम्। कथं व्यक्तं क्रियते? यथा शुकास्यात् गलितं श्रीमद्भागवतं महापुराणं श्रीधरस्वामिना व्यक्तं कृतमित्यध्याहारः। कथम्भूतं भागवतं जातकं च? सद्भावाकलितं =सन् प्रशस्तो भावो विष्णुभक्तिः तेनाकलितं विशिष्टं, (जातकपक्षे)— सद्भावैस्तन्वादिद्वादशभावैस्तात्पर्यैर्वा विशिष्टं, पदार्थललितं पदार्थैः परमभक्त्युद्योतकैः श्रवणकीर्तनादिभिः ललितं रुचिरं; (जातकपक्षे)–पदार्थैः सानन्दसदनादिभिर्मनोहरं, योगाङ्गलीलार्चितं=योगो भक्तियोगस्तस्याङ्गानि 'यमनियमप्राणायामप्रत्याहारध्यानधारणासमाधयः' तेषां लीला उपदेशविशेषास्ताभिरर्चितं महितं, (जातकपक्षे)—योगाङ्गानि ग्रहभावादीनि तेषां लीला योग्यत्वेन घटनविशेषास्ताभिरर्चितं प्रशस्तमित्यर्थः। ज्योतिर्विदां जीवनं=ज्योतिः परमात्मा 'नारायणः परं ज्योतिरिति' श्रुतेः तद्विदां ब्रह्मविदां जीवनं कालक्षेपयोग्यं (जातकपक्षे)—ज्योतिर्विदां

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


=गणकानां जीविकाप्रदत्वाज्जीवनमित्यर्थः । वृत्तस्रग्धरया =स्रग्धरा-वृत्तैरित्यर्थः । जात्यभिप्रायेणैकवचनोक्तिः तस्य लक्षणं श्रुतबोधे—"चत्वारो यत्र वर्णाः प्रथममित्यादि" ॥ १—२ ॥

गणेशञ्च दिनेशञ्च नत्वा सीतां सरस्वतीम् ।
जातकालङ्कृतेर्भाषा-टीकां कुर्वे सुबोधिनीम् ॥

भाषार्थ—जिनके चरणकमलों के स्मरण से अनेक प्रकार की कार्य-सिद्धियां शीघ्र ही परिपूर्ण होती हैं और विघ्नरूप पर्वतों का शीघ्र ही नाश होता है ऐसे आनन्दयुक्त सब के हृदयकमल में रहनेवाले सिद्धि-सदन ( श्रीपति ) तथा लम्बोदर ( गणेश ) और भारती ( सरस्वती ) तथा सूर्यादि ग्रहसमूह और अपने गुरु को भक्तिपूर्वक प्रणाम करके मैं गणेशकवि शुक्राचार्योक्त जातक को स्रग्धरा छन्दों द्वारा प्रगट करता हूँ ।

किस प्रकार प्रकट करता हूँ ?—जिस प्रकार शुकदेव मुनि के मुखारविन्द से गिरे हुए श्रीमद्भागवत को श्रीधर स्वामी ने किया । यह जातक कैसा है कि तन्वादि-द्वादश भावों के फल से संयुक्त, तथा पद और अर्थों से ललित ( मनोहर ) और योगों के अङ्गों ( ग्रहभावादिकों ) से प्रशस्त और गाथोक्ति ( गाथाओं की उक्ति हैं जिसमें ) तथा जनादिसुफल ( मनुष्यादिकों का शुभाशुभ फल है जिसमें ) और ज्योतिश्शास्त्र जाननेवालों का जीवन । श्रीमद्भागवत कैसा है ?—सद्भाव ( प्रशस्त विष्णु की भक्ति ) से सहित पदार्थ ( भक्त्युत्पादक श्रवण कीर्तन आदि ) से मनोहर तथा योगशास्त्र के अङ्ग ( नियमादि ) की लीला ( उपदेश ) से प्रशस्त, गाथाओं की उक्ति है जिसमें, और जनादिकों का सुन्दर फल ( भक्ति ज्ञान रूप ) है जिसमें तथा ज्योतिः ( परब्रह्म ) को जानने वालों का जीवन ( कालक्षेप योग्य ) ॥ १-२ ॥

ननु श्रीधरस्वामिवद्भवतापि शुकजातकव्याख्याने कर्तव्ये ग्रन्थारम्भो नोचितस्तत्राह—

यत्पूर्वं परमं शुकास्यगलितं सज्जातकं फक्किका-
रूपं गूढतमं तदेव विशदं कुर्वे गणेशोऽस्म्यहं ।

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha



दैवज्ञः सुतरां यशःसुखमतिः श्रीहर्षदं स्रग्धरा-
वृत्तैश्चारु नृणां शुभायनपदं श्रीमच्छिवानुज्ञया ॥ ३ ॥

यत्पूर्वमिति—गणेशनामाहं श्रीमच्छिवानुज्ञया = वेदशास्त्रसम्पन्नशिव-नाम्नो गुरोराज्ञया, तत्प्रीत्यर्थमिति भावः। पूर्वभावकाले शुकास्यगलितं छन्दोरहितत्वात् फक्किकारूपं गूढतमम् = अतिशयेन गहनं न तु विशदं, परमं = सारार्थनिरूपणेनोत्कृष्टं यज्जातकं तदेव स्रग्धरावृत्तैश्चारु = रुचिरं विशदं कुर्वे, फक्किकारूपस्य गूढतमस्य विशदीकरणं श्लोकैरेवोचितमित्याशयः। कथम्भूतो गणेशः? दैवज्ञोऽदृष्टवेत्ता कर्तव्यग्रन्थभावितवार्तादर्शीति गूढभावः। सुतरां, यशःसुखमतिः = अतिशयितकीर्तिजन्यसुखे मतिर्यस्य सः, प्रयोजनगर्भमिदं विशेषणं यशोऽन्यसुखार्थमिति भावः। कीदृशं? श्रीहर्षदं = श्रियं हर्षं च ददाति तत्, शुभायनपदं = शुभायनानां शुभजातकानां आनन्दसिद्धिसदनादीनां पदं = स्थानम् ॥ ३ ॥

भाषा०—पूर्व समय में शुकदेवजी के मुखकमल से गिरा हुआ मनुष्यों को सम्पत्ति तथा आनन्द देनेवाला और मनुष्यों का मङ्गलास्पद, फक्किका रूप अत्यन्त कठिन जो जातक है उसी को यश और सुख की चाहने वाला दैवज्ञ ( ज्यौतिषी ) मैं गणेश कवि श्रीशिव नामक गुरु की आज्ञा से स्रग्धरा छन्दों में विशद ( अत्यन्त सरल ) करता हूँ ॥ ३ ॥

ननु सत्कवीनां हर्षप्रदं त्वदीयं जातकं न स्यादित्याह—

भूयांसः सन्तिः भूमौ निजमतिरचनाशालिनः काव्यगुम्फे
सङ्ख्यावन्तस्तथाऽपि प्रचुरपरगुणानन्दलीलां भजन्ते।
चञ्चद्गाम्भीर्यपद्मा-विबुध-विटपिनां जन्मसम्प्राप्तिभूतो
मर्यादां न स्वकीयान्त्यजति किल महान्नत्वधाम्भाःॐसरस्वान् ॥४॥

भूयांस इति—भूमौ यद्यपि काव्यगुम्फे = गद्यपद्यरचनायां निजमति-रचनाशालिनः = निजमत्या काव्यरचना तया शालन्ते ते भूयांसो निपुणाः संख्यावन्तः = कवयः सन्ति, तथाऽपि प्रचुरपरगुणानन्दलीलां भजन्ते

CC-0. Prof. Satya Vrat Shastri Collection.

ॐ 'प्युदन्वान्' इति पाठः साधुः।

Digitized By Siddhanta eGangotri Gyaan Kosha


=प्रकृष्टपरगुणानुभवजन्यानन्दलीलां उद्वहन्ति, नोपेक्षन्त इत्यर्थः। "पर-गुणपरमाणून् पर्वतीकृत्य नित्यं निजहृदि विकसन्तः सन्ति सन्तः कियन्तः" इत्युक्तत्वात्प्रकृत्यापरगुणानुभवजन्यप्रमोद एव तेषां लीलेति भावः। उक्तमर्थमर्थान्तरन्यासेन द्रढयति, चञ्चद्गाम्भीर्यं च पद्मा च विबुधविटपी चेति चञ्चद्गाम्भीर्यपद्माविबुधविटपिनः=चञ्चतो द्योतमाना गाम्भीर्याद-यश्च, एतेषां जन्मसम्प्राप्तिभूतः=आश्रयोऽपि रत्नधामापि=रत्नगृहमपि सरस्वान्=समुद्रः स्वकीयां मर्यादां=स्थितिं न त्यजति, तथैव कवयोऽपि प्रमोदैरन्विति भावः। गाम्भीर्यं=निश्चलता, पद्मा=लक्ष्मीः, विबुधविटपी=पारिजातः। अत्र रत्नधामा, इति पदं चिन्त्यं धाम-शब्दस्य नपुंसकलिङ्गत्वात्, अत्र तत्पुरुषसमासे परवल्लिङ्गं द्वन्द्वतत्पुरुष-योरित्यनुशासनेन रत्नधामेति नपुंसकान्तत्वस्याऽदन्तत्वात्। अतो रत्नधामाप्युदन्वानिति पाठः समीचीनः॥ ४॥

भाषा०—इस पृथ्वी पर ऐसे अनेक कवि लोग हैं जो अपनी बुद्धि से काव्य रचना करने में अति प्रवीण हैं तथापि दूसरों के उत्तम गुणों से अत्यन्त आनन्द पाते हैं। जैसे अत्यन्त अगाध और सर्व-सम्पत्तिप्रदा लक्ष्मी तथा कल्पवृक्ष का उत्पत्ति-स्थान अति महान् रत्नों का भवन होकर भी समुद्र अपनी मर्यादा को नहीं छोड़ता। भाव यह है कि इसी प्रकार विज्ञजन मेरी कृति को देखकर अवश्य आनन्दित होंगे॥ ४॥

अथ तन्वादीनां सामान्यविशेषसंज्ञाः कथ्यन्ते यावदध्यायम्। आदौ तावल्लग्नादीनां देहादिसंज्ञां तेषां सर्वेषां भावसंज्ञां च शार्दूलविक्रीडितेनाह—

देहं द्रव्यपराक्रमौ सुखसुतौ शत्रुः कलत्रं मृति—
र्भाग्यं राज्यपदं क्रमेण गदिता लाभ-व्ययौ लग्नतः।
भावा द्वादश तत्र सौख्यशरणं देहं मतं देहिनां
तस्मादेव शुभाऽशुभाख्यफलजः कार्यो बुधैर्निर्णयः॥ ५॥

देहं द्रव्यपराक्रमाविति—लग्नत इति ल्यब्लोपे पञ्चमी, लग्नमारभ्य, क्रमेण देहादयो द्वादशभावाः गदिताः=उक्तास्तत्र लग्नं देहो देहभावः द्वितीयतृतीयौ द्रव्यपराक्रमौ=द्रव्यपराक्रमभावौ, चतुर्थपञ्चमौ भावौ

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha



सुखसुतौ, षष्ठः शत्रुः, सप्तमभावः कलत्रं, अष्टमो मृतिः, नवमो भाग्यं, दशमं राज्यपदं एकादशद्वादशौ लाभव्ययौ = लाभव्ययनामकौ, तत्र तेषु देहिनां देहः सौख्यशरणं = सुखाश्रयं मतम्। अतो बुधैः = ज्योतिर्विद्भिः तस्माद् = देहादेव = लग्नभावादेव शुभाशुभाख्यफलजो निर्णयो वक्ष्यमाणप्रकारेण कार्यः ।। ५ ।।

भाषा०—अब तन्वादि-द्वादशभावों की संज्ञा कहते हैं—देह १, द्रव्य २, पराक्रम ३, सुख ४, सुत ५, शत्रु ६, कलत्र ७, मृति (मृत्यु) ८, भाग्य ९, राज्यपद १०, लाभ ११, व्यय १२ ये क्रम से लग्नादि द्वादश भावों की संज्ञा हैं। यहाँ देह मनुष्यों का सुख स्थान है इस लिए विद्वान् उसी से शुभाशुभ फल का निर्णय करें। भाव यह है कि तनुभाव (लग्न) के शुभ होने से सब फल शुभ होता है, अशुभ होने से अशुभ ।। ५ ।।

लग्नं मूर्तिस्तथाङ्गं तनुरुदयवपुःकल्पमाद्यं ततः स्वं
कोशार्थाख्यं कुटुम्बं धनमथ सहजं भ्रातृदुश्चिक्यसंज्ञम् ।
अम्बापातालतुर्यं हिबुकगृहसुहृद्वाहनं यानसंज्ञं
बन्ध्वाख्यं चाम्बु नीरं जलमथ तनयं बुद्धिविद्यात्मजाख्यम् ॥

लग्नमिति—लग्नं मूर्त्यादिशब्दवाच्यमिति मुनय ऊचुरिति तृतीयेनाऽन्वयः। मूर्तिः, अङ्गं, तनुः, उदयं, वपुः कल्पमिति समाहारः। उदयो, वपुः, कल्पमाद्यं, तन्वादयो लग्नपर्यायाः इति प्रथमभावः। ततोऽनन्तरं, धनं, स्वं, कोशार्थाख्यं = कोशश्चार्थश्च कोशार्थौ आख्या यस्य स तथा तत्तथोक्तं धनं स्वादिसंज्ञमूचुरित्यन्वयः। एवमग्रेऽपि सहजं, भ्रातृदुश्चिक्यसंज्ञं तृतीयभावः। अम्बापातालतुर्यं हिबुकगृहसुहृद्वाहनं यानसञ्ज्ञं = याननामकमेवं बन्ध्वाख्यं = बन्धुसञ्ज्ञं अम्बु = नीरं जलं एते चतुर्थभावस्य पर्याया इति भावः। अथ तनयं बुद्धिविद्यात्मजाख्यं वाक्स्थानं पञ्चमभावस्यैते पर्यायाः ।। ६ ।।

---

टिप्पणी—"लग्नादि भावों की तनु, धन इत्यादि संज्ञा क्यों हुई?" इसकी युक्ति लघुपाराशरी की तत्त्वार्थप्रकाशिका टीका में देखो।

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


भाषा०—अब देहादि द्वादश भावों का संज्ञान्तर कहते हैं—लग्न, मूर्त्ति, अङ्ग, तनु, उदय, वपु, कल्प और आद्य, ये आठ तनुभाव की संज्ञा हैं। तथा स्व, कोश, अर्थ, कुटुम्ब, धन, ये पाँच धन भाव के नाम हैं। एवं सहज, भ्रातृ, दुश्चिक्य, ये तृतीय भाव की संज्ञा हैं। अम्बा, पाताल, तुर्य, हिबुक, गृह, सुहृद, वाहन, यान, बन्धु, अम्बु, नीर, जल, ये बारह नाम चतुर्थ भाव के हैं। और तनय, बुद्धि, विद्या, और आत्मज—॥ ६ ॥

वाक्स्थानं पञ्चमं स्यात्तनुजमथ रिपुद्वेषिवैरिक्षताख्यं
षष्ठं, जामित्रमस्तं स्मरमदनमदद्यूनकामाभिधानम् ।
रन्ध्रायुश्छिद्रयाम्यं निधनलयपदं चाऽष्टमं मृत्युरन्यद्
गुर्वाख्यं धर्मसञ्ज्ञं नवमिह शुभं स्यात्तपोमार्गसंज्ञम् ॥ ७ ॥

वाक्स्थानमिति—अथ षष्ठं रिपुद्वेषिवैरिक्षताख्यमूचुः, रिपुद्वेषिवैरिक्षतनामकमित्यर्थः। अथ सप्तमं जामित्रास्तस्मरमदनमदद्यूनकामाभिधानं ऊचुः सप्तमं जामित्रास्तस्मरमदनादिनामकमित्यर्थः। अथाऽष्टमं रन्ध्रायुश्छिद्रनिधनलयपदं मृत्युं अष्टमं रन्ध्रादिनामकमित्यूचुः। अतो नवममिह = शास्त्रे गुर्वाख्यं = धर्मसंज्ञं शुभं तपोमार्गसंज्ञमूचुः ॥ ७ ॥

भाषा०—वाक्, पञ्चम और तनुज, (ये तीन और चार पूर्व श्लोक में एवं सात) संज्ञा पञ्चम भाव की हैं। तथा रिपु, द्वेषी, वैरी, क्षत, ये षष्ठ भाव की संज्ञा है। तथा जामित्र, अस्त, स्मर, मदन, मद, द्यून, और काम, ये सप्तम भाव की संज्ञा है। रन्ध्र, आयु, छिद्र, याम्य, निधन, लयपद, अष्टम और मृत्यु, अष्टम भाव की संज्ञा है। और गुरु, धर्म, शुभ, तप, मार्ग ये नवम भाव के नाम हैं ॥ ७ ॥

ताताऽऽज्ञामानकर्मास्पदगगननभोव्योममेषूरणाख्यं
मध्यं व्यापारमूचुर्दशममथ भवं चागमं प्राप्तिमायम् ।
इत्थं प्रान्त्यान्तिमाख्यं मुनय इह ततो द्वादशं रिष्फमाहु-
र्ग्राह्यं बुद्ध्वा प्रवीणैर्यदधिकममुतः सञ्ज्ञया तस्य तच्च ॥ ८ ॥

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


तातेति—अथ तनोर्दशमं तातादिनामकमूचुरिति आज्ञा, मानं कर्म, आस्पदं, गगनं, नभो, व्योम, मेषूरणं, मध्यं, व्यापारमूचुरिति स्फुटा व्यक्तिः। अथ भवमेकादशमागमं प्राप्तिमायमूचुरित्थमुक्तम्। ततो द्वादशं प्रान्त्यान्तिमाख्यं=प्रान्त्यनामकं, अन्तिमं रिष्फम् इत्यूचुः, यदमुतः प्रोक्तात्पर्यायसमुदायादधिकं दृश्यते तस्य तस्य यन्नामोक्तं नामसंज्ञायां पर्यायं बुद्ध्वा तत्तुल्यार्थंशुद्धं ग्राह्यं यथा वित्तशब्देन तत्तुल्यार्थे धनं सहोत्थशब्देन सहजभावो ग्राह्य इति ॥ ८ ॥

भाषा०—तात, आज्ञा, मान, कर्म, आस्पद, गगन, नभस्, व्योम, मेषूरण, मध्य और व्यापार ये दशम भाव के नाम हैं। एवं आगम, प्राप्ति और आय ये एकादश भाव के नाम और प्रान्त्य, अन्तिम, रिष्फ, ये द्वादश भाव के नाम प्राचीन मुनिगणों ने कहा है। अनन्तर इससे अतिरिक्त संज्ञा भी उन उन भावों की संज्ञा द्वारा अपनी बुद्धि से विद्वान ग्रहण करें, जैसे वित्त शब्द से तुल्यार्थ होने से धन भाव की संज्ञा ग्रहण करे। इस प्रकार धन की जितनी संज्ञाएँ हैं उनसे धन भाव ग्रहण करे, एवं सहोत्थादि से सहज भाव, इत्यादि ॥ ८ ॥

आद्यं तुर्यं कलत्रं दशममिह बुधैः केन्द्रमुक्तं त्रिकोणं
पुत्रं धर्माख्यमुक्तं पणफरमुदितं मृत्युलाभात्मजार्थम्।
धर्मश्चापोक्लिमाख्यं व्ययरिपुसहजं कण्टकाख्यं हि केन्द्रं
चैतच्चातुष्टयं स्यात्त्रिकमिह गदितं वैरिरिःफान्तकाख्यम् ॥९॥

आद्यमिति—इह=शास्त्रे बुधैः आद्यं चतुर्थं सप्तम दशमं केन्द्रमुक्तं तथा कण्टकाख्यं चतुष्टयं च स्यात्। चतुष्टयमेव चातुष्टयम्। पञ्चमं नवमं त्रिकोणमुक्तं, मृत्युलाभात्मजार्थमष्टममेकादशं पञ्चमं द्वितीयं पणफरमुक्तम्। नवमं द्वादशं षष्ठं सहजं आपोक्लिमसंज्ञं उदितं, वैरिरिःफान्तकाख्य षष्ठद्वादशाष्टमं त्रिकमुक्तम् ॥ ९ ॥

भाषा—इस शास्त्र में प्राचीन विद्वानों ने प्रथम १ चतुर्थ ४ सप्तम ७ दशम १० इन भावों की केन्द्र संज्ञा तथा पञ्चम ५, नवम ९ इन दोनों की त्रिकोण संज्ञा, एवं द्वितीय २ पञ्चम ५ अष्टम ८ एकादश ११ इनकी

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


पणफर संज्ञा तथा तृतीय ३ षष्ठ ६ नवम ९ द्वादश १२ इनकी आपोक्लिम संज्ञा कही है। तथा कण्टक और चतुष्टय केन्द्र ही की संज्ञा है। और षष्ठ ६ अष्टम ८ और द्वादश १२ इनकी त्रिक संज्ञा कही है ॥ ९ ॥

अथ मित्रशत्रूनेकेन शार्दूलविक्रीडितेनाह—

चन्द्रेज्यक्षितिजा रवीन्दुतनयौ गुर्विन्दुसूर्याः क्रमा-
च्छुक्रार्कौ रविचन्द्रभूमितनया ज्ञार्कौ सितज्ञौ मताः।
अर्कादेः सुहृदः, समा अथ बुधः सर्वे हि शुक्रार्कजौ
भौमाचार्ययमा यमः कुजगुरू पूज्यः, परे वैरिणः ॥१०॥

चन्द्रेति—चन्द्रेज्यक्षितिजादयः अर्कादेः सुहृदः, बुधादयः समाः अन्ये वैरिणो मताः, मुनिभिरिति शेषः। सूर्यस्य चन्द्रेज्यक्षितिजाः सुहृदो = मित्राणि, बुधः समोऽन्ये वैरिणः। रविबुधौ चन्द्रस्य मित्रे सर्वे अन्ये समाः। गुर्विन्दुसूर्याः भौमस्य मित्राणि शुक्रशनी समौ, बुधः शत्रुः। शुक्रसूर्यौ बुधस्य मित्रे, भौमगुरुशनयः समाः, चन्द्रः शत्रुः। रवि-चन्द्रभौमाः गुरोर्मित्राणि, शनिः समः, बुधशुक्रौ शत्रू। बुधशनी शुक्रस्य मित्रे, कुजगुरू समौ, रविचन्द्रौ शत्रू। सितज्ञौ शनेर्मित्रे, गुरुः समः, रविन्दुभौमाः शत्रवः॥ १०॥

ग्रहमैत्रीचक्रम्।

| ग्रहः | र. | चं. | मं. | बु. | गु. | शु. | श. |
|---|---|---|---|---|---|---|---|
| मित्र | चं. गु. मं. | र. बु. | गु. चं. र. | शु. र. | र. चं. मं | बु. श. | शु. बु. |
| सम | बुध. | मं. गु. शु. श. | शु. श. | मं. गु. श. | श. | मं. गु. | गु. |
| शत्रु | शु. श. | ० | बु. | चं. | बु. श. | र. चं. | र. चं. मं. |

भाषा०—अब ग्रहों के मित्र शत्रु कहते हैं—चन्द्रमा, मङ्गल, बृहस्पति ये रवि के मित्र हैं। रवि और बुध चन्द्रमा के मित्र हैं। बृहस्पति, चन्द्रमा, और रवि, ये मङ्गल के मित्र हैं। शुक्र और सूर्य बुध के मित्र

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


हैं। रवि, चन्द्रमा और मङ्गल ये बृहस्पति के मित्र हैं। बुध और शनि ये शुक्र के मित्र हैं। तथा बुध और शुक्र ये शनैश्चर के मित्र हैं। बुध सूर्य का सम है। मित्रसे अतिरिक्त सब ग्रह चन्द्रमा के सम हैं। शुक्र और शनि मङ्गल के सम हैं। मङ्गल, बृहस्पति, शनि ये बुध के सम हैं। शनि बृहस्पति का सम है। मङ्गल और बृहस्पति ये शुक्र के सम हैं। बृहस्पति शनि का सम है। अवशिष्ट रव्यादि ग्रहों के शत्रु हैं।

इसका प्रयोजन यह है कि—मित्र की राशि में मित्र की दृष्टि और योग से ग्रहबली, और सम राश्यादि में मध्य बली, तथा शत्रु की राश्यादि में निर्बल हो जाता है ॥ १० ॥

अथ ग्रहाणां दृष्टीः पृथ्वीवृत्तेनाह—

तृतीयदशमे ग्रहो नवमपञ्चमेऽष्टाम्बुनी
क्रमाच्चरणवृद्धितः स्मरगृहं ततः पश्यति।
कुजः सितबुधौ शशी रविबुधौ सितक्ष्मासुतौ
गुरुर्यमशनो गुरुर्भवनपा इमे मेषतः ॥ ११ ॥

तृतीयेति—तृतीयदशमादिषु चरणवृद्धितः पश्यति, तत्र तृतीयदशमे चरणदृष्ट्या पश्यति, नवमपञ्चमे द्विचरणदृष्ट्या पश्यति, अष्टाम्बुनी अष्टमचतुर्थे चरणत्रयदृष्ट्या पश्यति, स्मरगृहं सप्तमं पूर्णं पश्यतीत्यर्थः। तृतीयदशमे शनिः, नवमपञ्चमे गुरुः, चतुर्थाष्टमे भौमः पूर्णदृष्ट्या पश्यतीति जातकान्तरे सविशेषो ज्ञेयः। इमे कुजादयो मेषतः = मेषमारभ्य भवनपाः = राशीशाः मेषस्य कुजः, वृषस्य शुक्रः, मिथुनस्य बुधः, कर्कस्य चन्द्रः, सिंहस्य रविरित्यादि ॥ ११ ॥

स्पष्टार्थं राशिस्वामिचक्रम्।

| राशयः | मे. | वृ. | मि. | क. | सिं. | क. | तु. | वृ. | ध. | मं. | कु. | मी. |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| ग्रहाः | मं. | शु. | बु. | चं. | सू. | बु. | शु. | मं. | वृ. | श. | श. | वृ. |

भाषा०—अब ग्रहों की दृष्टि कहते हैं तृतीय और दशम भवन को

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


ग्रह एक चरण से, तथा नवम और पञ्चम को दो चरण से, तथा चतुर्थ और अष्टम को तीन चरण से, एवं सप्तम भवन को चारो चरण ( सम्पूर्ण दृष्टि ) से ग्रह देखता है। तथा मङ्गल, शुक्र, बुध, चन्द्रमा, रवि, बुध, शुक्र, मङ्गल, बृहस्पति, शनि, शनि, बृहस्पति ये क्रमशः द्वादश राशियों के स्वामी हैं। दृष्टि की युक्ति लघुपाराशरी की टीका में देखिए ॥ ११ ॥

अध्यायं समापयति शालिन्या—

**हृद्यैः पद्यैर्गुम्फिते सूरितोषेऽलङ्काराख्ये जातके मञ्जुलेऽस्मिन् ।**
**सञ्ज्ञाध्यायः श्रीगणेशेन वर्यैर्वृत्तैर्दिग्भिः संयुतोऽयं प्रणीतः ॥१२॥**

## इति जातकालङ्कारे प्रथमोऽध्यायः ॥ १ ॥

हृद्यैरिति—श्रीगणेशेन विदुषा उत्त श्रीविशिष्टेन गणेशेन अलङ्काराख्ये = अलङ्कारनामके मञ्जुले = रुचिरे हृद्यैः पद्यैर्गुम्फिते = मनोहरैः श्लोकै रचितेऽस्मिन्=ग्रन्थे वर्यैः = श्रेष्ठैः दिग्भिः = दशभिः वृत्तैः = श्लोकैः अयं आदिमः = प्रथमः संज्ञाध्यायः प्रणीतः = उक्त इत्यर्थः ॥ १२ ॥

इति श्रीहरभानुविरचितायां जातकालं० टीकायां प्रथमोऽध्यायः ॥१॥

भाषा०—मनोहर पद्य से बने हुए पण्डितों को प्रसन्न करनेवाले इस सुन्दर जातकालङ्कार में श्रीगणेश कवि ने उत्तम दश श्लोकों के सहित प्रथम संज्ञाध्याय को बनाया है ॥ १२ ॥

इति ज्यौतिषाचार्यश्रीसीतारामशर्मकृतजातकालङ्कार-
भाषाटीकायां प्रथमोऽध्यायः ॥ १ ॥

## अथ भावाध्यायः ॥ २ ॥

अथ भावाध्यायो व्याख्यायते। तत्र कविः स्वविनयं विशदयन् भावफलं वक्तुं पृथिवीवृत्तेन प्रतिजानीते—

**शुकाननसरोरुहाद्गलितमत्र भूमीतले**
**फलं परमसुन्दरं सकलमाकलय्याऽधुना ।**

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


ब्रवीमि तनुभावतः प्रवरदैववित्तोषदं
यदत्र मम चापलं किमपि तत्क्षमध्वं बुधाः ! ॥१॥

शुकेति—शुकाननसरोरुहाद्गलितं अहं तनुभावतः = तत आरभ्य तत्फलं = जातकफलं अधुना ब्रवीमि । हे बुधाः ! = पण्डिताः ! अत्र=वचने मम यत्किमपि चापलं स्यात् तद्यूयं क्षमध्वम् इति प्रार्थना । किं कृत्वा ब्रवीमि ? अत्र = भूमीतले शुकाननसरोरुहात् = शुकमुखारविन्दाद्गलितं शिष्यद्वारा प्राप्तं, परमसुन्दरं सकलं फलं आकलय्य = विचार्य कथम्भूतं फलं ? प्रवरदैवविदां तोषदं = उत्कृष्टज्योतिर्विदामानन्ददम् 'अन्यत्रोक्तमन्यतो ग्राह्यमि' ति न्यायेन प्रथमं ग्रहभावस्पष्टता तेषां बलं च ज्ञातव्यं ततो भावसामान्यफलान्तरं शुभपापमिश्रग्रहदृष्टियोगादिकभावषड्वर्गो भावेशस्योदयास्तादिकं ज्ञातव्यम् । तदुक्तं पृथुयशसा—'यो यो भावः स्वामिदृष्टो युतो वा सौम्यैर्वा स्यात्तस्य तस्याऽस्ति वृद्धिः । पापैरेवं तस्य भावस्य हानिर्निर्देष्टव्या प्रश्नतो जन्मतो वा ।' तत्र विशेषो गर्गजातके—"नीचस्थो रिपुगेहस्थो ग्रहो भावविनाशकृत् ॥ उदासीनो ग्रहो मध्यो मित्रस्वर्क्षत्रिकोणगः । स्वोच्चस्थश्च ग्रहोऽप्येवं भाववृद्धिकरः स्मृतः" ॥ व्ययाष्टमषष्ठभावेषु विपरीतफलमाह उशनाचार्यः—"सौम्याः पुष्टिं पापा विपर्ययं संश्रिता ग्रहाः कुर्युः । मूर्त्यादिषु निधानान्त्ये रिपुभावे व्युत्क्रमात्फलदाः ॥" अन्यच्च सौम्यवर्गाश्रिता भावाः शुभतां प्राप्नुवन्ति हि । पापवर्गाधिका नेष्टास्तन्वाद्या नाऽत्र संशयः ॥ लग्नलग्नाधिपौ स्यातां बलाधिकतरौ यदि । तत्फलानां प्रवृद्धिः स्याद्धीनो हानिकरः स्मृतः ॥ एवं भावेषु सर्वेषु भावभावेशयोर्बलात् ॥ ततो जनुषि वक्तव्या हानिर्वृद्धिश्च कोविदैरिति' ॥ सर्वार्थचिन्तामणौ—लग्नादिभावाद्रिपुरन्ध्ररिःफे पापग्रहास्तद्भवनादिनाशः । सौम्यास्तु तेषूक्तफलप्रदाः स्युस्तन्वादिकानां फलमेवमाहुः ॥ १ ॥ यद्भावनाथो रिपुरन्ध्ररिःफे दुःस्थानपो यद्भवनस्थितो वा । तद्भावनाशं कथयन्ति तज्ज्ञाः शुभेक्षिते तद्भवनस्य सौख्यम् ॥२॥ तत्तद्भावात्त्रिकोणे स्वसुखमदनभे चास्पदे सौम्ययुक्तं पापानां दृष्टिहीने भवनपसहिते पापखेटैरयुक्ते । भावानां पुष्टिमाहुस्त्वथ च शुभकरीमन्यथात्वे प्रणाशं मिश्रं मिश्रैर्ग्रहेन्द्रैः सकलमपि तथा मूर्तिभावादिकानामिति ॥ १ ॥

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


भाषा०—अब भावाध्याय कहते हैं—शुकदेवमुनि के मुखारविन्द से इस पृथ्वी पर गिरा हुआ, दैवज्ञों को तुष्ट करने वाला जो परम सुन्दर फल हैं उन सबको मैं सङ्कलन करके तन्वादि भावों का फल कहता हूँ। इसमें जो कुछ मेरी चपलता हो उसे विज्ञजन क्षमा करें॥ १॥

अत्र त्रिभिः श्लोकैस्तनुभावविशेषमाह—

**देहाधीशः सपापो व्ययरिपुमृतिगश्चेत्तदा देहसौख्यं**
**न स्याज्जन्तोर्निजर्क्षे व्ययरिपुमृतिपस्तत्फलस्यैव कर्ता।**
**मूर्तौ चेत्क्रूरखेटस्तदनु तनुपतिः स्त्रीयवीर्येण हीनो**
**नानातङ्काकुलः स्याद् व्रजति हि मनुजो व्याधिमाधिप्रकोपम्॥**

देहाधीश इति—देहाधीशो=लग्नस्वामी सपापः=पापग्रहेण युक्तः, व्ययरिपुमृतिगः=द्वादशषष्ठाष्टमान्यतमस्थानगतश्चेत्तदा जातस्य देहसौख्यं न स्यात्। अस्य योगस्य धनादिभावे विचार्यत्वद्योतनाय प्रथममुक्तिरिति गम्यते—"यद्भावनाथो रिपुरन्ध्ररिःफे तद्भावनाशं कथयन्ति तज्ज्ञाः" इति प्राक् लिखितत्वात्। अन्यदाह व्ययेशो व्यये, षष्ठेशः षष्ठे, अष्टमाधीशोऽष्टमे च तत्फलस्यैव कर्त्ता देहसौख्याभावकर्ता स्यात्। अयमर्थो यवनमतेन विरुद्धः। यथा बृहज्जातके—"रिपुभवनपे रिपुस्थे नीरुग्वैरीसुखी कृपणः। निधनपतौ निधनस्थे व्यवसायी व्याधीवर्जितोऽप्युदितः"॥ विरोधशमनाय अयमर्थो बोध्यः। देहाधीशे व्ययरिपुमृतिगे सति तद्भवनपेऽपि तत्रस्थे शुभफलं स्यादिति न वाच्यम्। पूर्वोक्तयोगे सति व्ययरिपुमृतिपः स्वभवनगतश्चेत्तत्फलस्यैव कर्तेति वाच्यम्। योगानामचिन्त्यफलत्वादिति। अथाऽन्ययोगमाह। मूर्त्ताविति-मूर्तौ=लग्ने क्रूरग्रहः=क्रूरखेटः, तनुपतिः=लग्नेशः स्वीयवीर्येण हीनः=स्वकीयबलहीनश्चेत्तदा जातो मनुजः नानातङ्काकुलः=अनेकरोगाकुलः व्याधिं=रोगं आधिप्रकोपं=चिन्ताव्याप्तत्वं व्रजति=प्राप्नोति। बलहीनत्वं परपुंग्रहनीचास्तत्वादिभिर्ज्ञेयम्। तदुक्तं जातकामृते—'स्वोच्चं मूलत्रिकोणं स्वगृहमधिसुहृद्गेहकं मित्रकं स्यादौदासीन्यं समर्क्षं रिपुभमधिरिपोर्भं च नीचाभिधानम्। पूर्वं पूर्वं बलीयः परमपरमिदं हीनसत्त्वं तदस्मादि'

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


त्यादिवत्पद्धतिप्रकारमतेन उत्तमबलत्वं च ज्ञेयम्, अल्पे बले हीनबल इति पद्धतिवचनात् ॥ २ ॥

भा०—जिसके जन्म समय लग्नेश पापग्रह से युक्त होकर द्वादश १२, अष्टम ८, अथवा ६ षष्ठ भवन में हों तो उसको शरीर सुख नहीं होता है। इसी प्रकार द्वादशेश द्वादश भवन में, अष्टमेश अष्टम भवन में, षष्ठेश षष्ठ भवन में हो तो वही फल देते हैं अर्थात् उसे देह सुख नहीं होता है। एवं यदि पापग्रह लग्न में हो और लग्नेश अपने बल से हीन हो तो वह मनुष्य अनेक रोगों से संयुक्त होकर मानसिक चिन्ता में प्राप्त होता है ॥

युक्ति—स्पष्ट है कि शरीर के अधिपति ही व्यय, रोग, और मृत्यु स्थान में पड़ जाँय तो फिर देहसुख कहाँ से हो सकता है? तथा जो भाव अपने स्वामी या शुभ ग्रह से युक्त हों उसकी वृद्धि, और पाप ग्रह से युक्त हों तो उसकी हानि होती है। अतः व्यय, रिपु और मृत्यु स्थान के स्वामी अपने अपने स्थान में हों तो व्यय, रिपु ( रोग ) और मृत्यु की प्रबलता होने से भी देह सुख का अभाव होना सिद्ध है। एवं तनुपति हीन बली हो और तनुभाव पापाक्रान्त हो तो आधि-व्याधि आदि होनी ही चाहिये ॥ २ ॥ अथ शुभयोगानाह—

अङ्गाधीशः स्वगेहे बुधगुरुकविभिः सँय्युतः केन्द्रगो वा<br>
स्वीये तुङ्गे स्वमित्रे यदि शुभभवने वीक्षितः सत्स्वरूपः ।<br>
स्यान्नूनं पुण्यशीलः सकलजनमतः सर्वसम्पन्निधानं<br>
ज्ञानी मन्त्री च भूपः सुरुचिरनयनो मानवो मानवानाम् ॥ ३ ॥

अङ्गाधीशः लग्ने चेदित्येको योगः। बुधगुरुकविभिर्युक्तो लग्नेशः केन्द्रग इति द्वितीयः। स्वीये तुङ्गे स्वोच्चे "अजवृषभमृगाङ्गनाकुलीराः झषवणिजौ च दिवाकरादितुङ्गाः" इत्याद्युक्तेः। स्वमित्रे = स्वमित्रगृहे अथवा शुभभवने शुभग्रहैः वीक्षितः लग्नेश इति तृतीयः। एषामन्यतमयोगे जातो मानवः मानवानां मध्ये भूपादिकः स्यात्। भूपः=भूपालो, मन्त्री =अमात्यः, सर्वसम्पन्निधानं = सर्वासां सम्पदामाश्रयः, ज्ञानी = भूपत्वाद्युपयुक्तः ज्ञानवान्, सत्स्वरूपः = सत्त्वगुणानुरूपः, अतश्च पुण्यशीलः

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


=सुकृती, रुचिरनयनः=सुन्दरनयनादिशरीरः, सकलजनमतः=सर्वजनमान्यः, पुण्यशीलशब्देन सत्यार्जवादि द्योत्यते तदुक्तं जातकरहस्ये—यः सात्त्विकस्तस्य दयास्थिरत्वं सत्यार्जवं ब्राह्मणदेवभक्तिरिति ॥ ३ ॥

भाषा०—यदि लग्नेश लग्न में हो अथवा बुध, बृहस्पति, शुक्र से संयुक्त होकर केन्द्र में हो, अथवा अपनी उच्च में अपने मित्र के राशि में हो, यदि वा शुभग्रह के भवन में हो, वा शुभग्रह से देखा जाता हो तो वह मनुष्य निश्चय अति सुन्दर और सब मनुष्यों में मान्य ( लोकप्रिय ) सब प्रकार की सम्पत्ति से युक्त, ज्ञानी, सुन्दर नेत्र वाला, मनुष्यों में श्रेष्ठ, मन्त्री अथवा राजा होता है ॥ ३ ॥

इसकी युक्ति—"यो यो भावः स्वामिसौम्यैर्युतो वा, दृष्टो वा स्यात् तस्य तस्यास्ति वृद्धिः । पापैरेवं तस्य भावस्य हानिर्निर्देष्टव्या जन्मतः पृच्छतो वा ॥" इसलिये देहाधीश को तनुभाव में केन्द्र में बुधादि शुभग्रह से युक्त होने से शारीरिक शुभफल होना ही चाहिये। इसी प्रकार सब भावों में समझना चाहिए ॥ ३ ॥

अथाऽनिष्टयोगत्रयं श्लोकेनाह—

**लग्ने क्रूरेऽथ याते खलखचरगृहं लग्ननाथे रवीन्दू**
**क्रूरान्तःस्थानसंस्थावथ दिनपनिशानाथयोर्द्यूनयायी ।**
**भूमीपुत्रस्तु पृष्ठादुदयमधिगतश्चन्द्रजश्चेन्मनस्वी**
**स्यादन्धो दुष्टकर्मा परभवनरतः पूरुषः क्षीणकायः ॥ ४ ॥**

क्रूरे लग्ने क्रूरग्रहराशौ लग्नेशः स्थितः अयं एको योगः । रवीन्दू=पुष्पवन्तौ क्रूरयोर्ग्रहयोर्मध्यस्थौ=क्रूरमध्यस्थौ, क्रूरमध्यस्थत्वं राश्यंशापेक्षया वा ज्ञेयम् । सङ्कोचे प्रमाणाभावात् अयं द्वितीयो योगः । अथ दिनपनिशानाथयोः=सूर्याचन्द्रमसोः द्यूनयायी=सप्तमगः भौमः, बुधः पृष्ठादुदयं अधिगतः=पृष्ठोदयराशौ स्थित इति तृतीयो योगः । अत्र जातः पुरुषः मनस्वी प्रशस्तमना इत्यर्थः । अन्धः दुष्टकर्मा परभवनरतः=परगृहवासरतः परस्त्रीरतो वा स्यात् । क्षीणकायः=क्षीणशरीरश्च । मनस्वित्वं कालगतचन्द्रस्य योगम् । एवं तनुभावस्य शुभाऽशुभयोगा

CC-0. Prof. Satya Vrat Shastri Collection

Digitized By Siddhanta eGangotri Gyaan Kosha

उक्ताः। ननु क्वचिच्छुभयोगेऽपि शुभफलं नोपलभ्यते तथा अशुभयोगेऽशुभफलमिति तत्र को विशेष इति चेत्सत्यं क्रूरग्रहदृष्टयुतत्वादियोगेन। अयं भावः—शुभयोगकारकग्रहोपरि क्रूरदृष्टौ सत्यां विनिश्चयप्राप्तं फलं नोपलभ्यते, अशुभयोगकारकग्रहोपरि शुभदृष्ट्याऽशुभं नोपलभ्यते। ताजिककारैरित्थशालस्य दृष्टिप्रयुतमणऊयोगेन भञ्जनं कृतमुक्तम्। बृहज्जातककारेण "न शुभा उदिता योगा याप्या भवन्ति शुभेक्षिता" इत्युक्तम्। इति तनुभावः॥ ४॥

भाषा०—पापग्रह लग्न में और लग्नेश पापग्रह की राशि में हो, अथवा सूर्य और चन्द्रमा पापग्रहों के मध्य में हो, अथवा सूर्य से किंवा चन्द्रमा से मङ्गल सप्तम भवन में हो और बुध पृष्ठोदय राशि में हो तो इन तीनों योग में पुरुष मनस्वी, अन्धा, कुकर्म करनेवाला, दूसरे के घर में रहनेवाला और दुर्बल शरीर वाला होता है॥ ४॥

मनस्वीपद से मनमाने काम करनेवाला समझना। संस्कृत-टीकाकार ने "प्रशस्तमनाः" अर्थ किया है। यह असङ्गत प्रतीत होता है। क्योंकि जो दुष्टकर्मा हो वह प्रशस्तमना कैसे हो सकता है?॥ ४॥

अथ धनभावफलं श्लोकद्वयेन ब्रुवन् प्रथमं धनयोगचतुष्टयमाह—

**कोशाधीशः स्वराशौ सुरगुरुसहितः सर्वसम्पत्प्रदः स्यात्**
**केन्द्रे वाऽथ त्रिके चेद्भवति हि मनुजः क्लेशभाग्द्रव्यहीनः।**
**स्वान्त्याधीशौ त्रिकस्थौ क्वचितनुपयुतौ स्यात्तदा नेत्रहीन-**
**श्चन्द्रः पापेन युक्तो धनभवनगतः शुक्रयुङ् नेत्रहीनः॥५॥**

कोषाधीश इति। कोशाधीशो=धनेशः गुरुयुतः। स्वराशैः=स्वे भावे केन्द्रे वा चेत्तदा जातस्य सर्वसम्पत्प्रदः स्यात्। अथाऽनन्तरमन्ययोग उच्यत इत्यर्थः। गुरुयुतो धनाधीशः त्रिकेषु=षष्ठाष्टमद्वादशेषु अन्यतमे चेज्जातो मनुजः क्लेशभाक्, द्रव्यहीनश्च स्यात्, स=गुरुः धनाधीशः षष्ठे चेदयं योगः शिथिलो ज्ञेयः, तं प्रति चाल्पधनयोगसद्भावात्। धनाधीशस्य शुभत्वे मध्यधनयोगसद्भावात्। तदुक्तं बृहज्जातके—"लग्नादतीव वसुमान् वसुमान् शशाङ्कात् सौम्यग्रहैरुपचयोपगतैः समस्तैः। द्वाभ्यां

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


समोऽल्पवसुमांश्च तदूनतायामन्येष्वसत्स्वपि फलेष्विदमुत्कटेन" ॥ अथान्ययोगः। स्वान्त्याधीशौ द्वितीयद्वादशाधीशौ शुक्रलग्नेशयुक्तौ चेत्तदा जातः नेत्रहीनः = अन्धः स्यात्। अथान्ययोगः। शुक्रपापाभ्यां युक्तश्चन्द्रो धनस्थश्चेत्तदा जातो नेत्रहीन इति ॥ ५ ॥

भाषा०—कोशाधीश ( धन भाव का स्वामी ) बृहस्पति से युक्त होकर अपनी राशि में अथवा केन्द्र में हो तो जातक को सर्व-सम्पत्ति देता है। यदि बृहस्पति सहित त्रिक (६।८।१२) स्थान में हो तो मनुष्य दुःखभागी और धनहीन होता है। तथा द्वितीय और द्वादश भाव के स्वामी शुक्र और लग्नेश से सहित होकर त्रिक स्थान ( ६।८।१२ ) में हो तो इस योग में जन्म लेनेवाला नेत्रहीन ( अन्धा ) होता है। एवं यदि चन्द्रमा पापग्रह और शुक्र से संयुक्त धनभवन में हो तो जातक नेत्रहीन होता है ॥ ५ ॥

पूर्वार्धं की युक्ति स्पष्ट ही है। दूसरा और बारहवाँ स्थान नेत्र के हैं, इस लिये इन दोनों स्थान के स्वामी सहित लग्नेश त्रिकभाव में हो तो नेत्रहीन अवश्य ही होगा ॥ ५ ॥

अन्ययोगत्रयं तत्र द्वितीययोगस्य तातादिष्वतिदेशं चाह—

**शुक्रः सेन्दुस्त्रिकस्थो जनुषि निशि नरः प्राप्नुयादन्धकत्वं**
**जन्मान्धः सार्कशुक्रस्तनुभवनपतिः स्यात्तदानीं मनुष्यः।**
**एवं तातानुजाम्बासुतनिजगृहिणीस्थाननाथाः स्थिताश्चे-**
**दादेश्यं तत्र तेषां प्रवरमतियुतैरन्धकत्वं तदानीम् ॥ ६ ॥**

जनुषि = जन्मसमये सेन्दुः = सचन्द्रः शुक्रस्त्रिकस्थः षष्ठाष्टमद्वादशेषु अन्यतमे चेत्तदा जातो मनुजः निशि अन्धकत्वं प्राप्नुयात्। सार्कशुक्रः = सूर्यशुक्रयुतः तनुभवनपतिः = लग्नेशः त्रिकस्थ इत्यनुषङ्गः तदानीं जातो मनुजः जन्मान्धः = जन्मनैवान्धः। तातादीनां स्थाननाथाः एवं = पूर्वोक्तप्रकारेण सार्केन्दुशुक्रास्त्रिकस्थाश्चेत्तदानीं तेषां तातादीनां अन्धकत्वं प्रवरमतियुतैरादेश्यं वक्तव्यम्। तत्र तातः = पिता, अनुजः = कनिष्ठभ्राता, अम्बा = माता, निजगृहिणी = भार्या, प्रवरमतिशब्देन तातादीनां जन्मन्यपि अन्धयोगज्ञानत्वं सूच्यते ॥ ६ ॥

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


भाषा०—जन्म समय यदि शुक्रसंयुक्त चन्द्रमा त्रिक ( ६।८।१२ ) इनमें से किसी स्थान में हो तो मनुष्य रात्र्यन्ध होता है। और यदि सूर्य शुक्र के साथ लग्नेश त्रिक ( ६।८।१२ ) में हो तो वह मनुष्य जन्मान्ध होता है। इसी प्रकार यदि तात १०, भ्रातृ ३, जननी ४, सुत ५, गृहिणी ७, इन भावों में जिसका स्वामी सूर्य, चन्द्र, शुक्र से संयुक्त होकर त्रिक ( ६।८।१२ ) में पड़े तो तीक्ष्णबुद्धि वाले उसका अन्धकत्व समझें। अर्थात् तात-भवन के स्वामी उपरोक्त योगयुक्त हो तो पिता अन्धा होता है। एवं भ्रातृ-भावाधीश से भ्राता अन्धा होता है इत्यादि बुद्धिमान् स्वयं विचार करें॥ ६ ॥

शुक्र एक नेत्र से हीन हैं और चन्द्रमा रात्रिपति हैं ये दोनों यदि त्रिक में पड़ेंगे तो रात्रि में अन्ध होना, एवं यदि दिनपति सूर्य और लग्नेश ये दोनों शुक्र के समान त्रिक में पड़ें तो जन्मान्ध होना युक्ति सिद्ध ही है॥ ६ ॥

अथ भ्रातृसम्भवतत्सुखादियोगानाह—

**भ्रातृस्थानेशभौमौ व्ययरिपुनिधनस्थानगौ बन्धुहीनः**
**स्वक्षेत्रे सौम्यदृष्टे सहजभवनपे मानवः स्याच्च तद्वान्।**
**केन्द्रस्थे बन्धुसौख्यं शुभविहगयुते स्याददभ्रं नराणां**
**पापैश्चेदन्यथैतत्तदनु निजधिया ज्ञेयमित्थं समस्तम्॥७॥**

भ्रातृस्थानेशभौमौ = तृतीयाधिपतिभौमौ व्ययरिपुनिधनस्थानगौ =(१२।६।८) त्रिकस्थौ यदि तदा जातः बन्धुहीनः = सामान्यशब्दनिर्देशेन सहोदरबन्धवो विवक्षितास्तै रहित इत्यर्थः। सहजभवनपे = सहजाधिपे स्वक्षेत्रे = स्वगृहे सौम्यदृष्टे = शुभग्रहदृष्टे सति मानवः तद्वान् = बन्धुमान् स्यात्। सहजाधिपे शुभग्रहयुते केन्द्रस्थे अदभ्रं बहुलं बन्धुसौख्यं स्यात्। केन्द्रस्थे सहजभवनपे पापग्रहैर्युते चेदन्यथा = बन्धुसौख्यं न स्यात्। युते दृष्टे इत्युपलक्षणम्। इत्थं = अमुना प्रकारेण बुद्धिमद्भिर्निजधिया = स्वबुद्धया समस्तं भावफलं तदनु = योगविचारानन्तरं ज्ञेयम्, अयमर्थः योगे सत्यपि योगकर्तृषु भूयसी पापदृष्टिः = पापयोगः योगकर्तृणां नीचास्ततो योगे प्रागुक्तं लक्षणं न स्यात् इति भावः॥ ७ ॥

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


भाषा—भ्रातृ ( ३ ) स्थान के स्वामी और मङ्गल दोनों यदि द्वादश, अष्टम, षष्ठ भवन में पड़ें तो वह मनुष्य बन्धुहीन होता है। तथा सहज भवनेश यदि स्वक्षेत्र में हो, शुभग्रह से युक्त हो तो मनुष्य बन्धुयुक्त होता है। इस प्रकार यदि सहजेश केन्द्र में हो, शुभग्रह से दृष्ट हो तो बन्धुओं का सुख सर्वदा होता है। यदि पापग्रह से देखा जाता हो तो अन्यथा समझे अर्थात् बन्धु का सुख नहीं होता है, इत्यादि अपनी बुद्धि से मतिमान् सब विचार करे ॥ ७ ॥

अथ चतुर्थभावफलं वदन् योगचतुष्टयमाह—

पातालेशः स्वराशौ शुभखचरयुतो भाग्यनाथेन युक्तः
सामन्तः स्याच्चतश्चेत्सुरपतिगुरुणा वाहनेशस्तनुस्थः।
संदृष्टो राजपूज्यस्तदनु च हिबुकाधीश्वरो लाभसंस्थो
यानं पश्यन्नराणां निवहमभिमतं वाहनानां प्रदत्ते ॥८॥

पातालेशः = चतुर्थेशः स्वराशौ शुभखचरयुतः = शुभग्रहयुक्तः सन् भाग्यपेन = भाग्यस्वामिना युक्तश्चेजातः सामन्तः स्यात् = माण्डलिकः स्यात्। ततो योगान्तरं लग्नस्थो = वाहनेशो गुरुणा पूर्णदृष्ट्या दृष्टश्चेत्तदा-जातो राजपूज्यः = राजकृतसन्मानभाजनं स्यात्। तदनु गुरुदृष्टः सुखेशः लाभगश्चेत्, यद्वा गुरुदृष्टः सुखेशः यानं पश्यन्भवति तदा वाहनानां निवहं = समूहं नराणां अभिमतं प्रदत्ते। इदं योगद्वयं वा शब्दप्रयोजकेऽपि ज्ञेयमन्ययोगलाभाच्चतुर्थदृष्टिविरहात् योगप्रभवप्रसङ्गात् ॥ ८ ॥

भाषा०—चतुर्थ भवन का स्वामी यदि शुभग्रह से और नवमेश से संयुक्त अपने स्थान में हो तो वह सामन्त ( माण्डलिक ) अर्थात् एक ( प्रान्त ) जिला का राजा ( कलेक्टर ) होता है। तथा जिसके जन्म-काल में चतुर्थेश लग्न में हो और बृहस्पति से देखा जाता हो तो वह राज्यपूज्य होता है। तथा यदि चतुर्थेश एकादश भाव में हो और बृह-स्पति से दृष्ट हो अथवा किसी स्थान में स्थित चतुर्थेश गुरु से दृष्ट होकर चतुर्थ भाव को देखता हो तो मनुष्य को अभीष्ट वाहनों का समूह देता है ॥ ८ ॥

CC-0. Prof. Satya Vrat Shastri Collection.
चतुर्थभाव सुख और वाहन का है अतः युक्ति स्पष्ट ही है ॥ ८ ॥

Digitized By Siddhanta eGangotri Gyaan Kosha



अथ गृहप्राप्त्यादियोगानाह—

स्वक्षेत्रे तुर्यनाथस्तनुपतिसहितः स्यादकस्माद्गृहाप्तिः
सौहार्दं वा सुहृद्भिस्तदितरगृहगश्चेद् गृहालभ्ययोगः ।
यावन्तः पापखेटा धनदशमगृहप्रान्त्यपैश्चेत्त्रिकस्था
युक्तास्तावत्प्रमाणा ज्वलनवशगताः क्लेशदाः स्युर्गृहा नुः ॥९॥

लग्नेशसहितश्चतुर्थभावनाथः स्वक्षेत्रे = चतुर्थभवने चेत्तदा जातस्य अकस्माद् = अयत्नतो गृहाप्तिः = गृहलाभः स्यात्। तथा सुहृद्भिः=हितकारकैर्जनैः सौहार्दं = प्रीतिः सुहृज्जनयुक्तं गृहादि स्यादित्यर्थः। तनुपतियुक्तः चतुर्थनाथः तदितरगृहगः = चतुर्थभवनादन्यभवनस्थश्चेत्तदा गृहालभ्ययोगः = गृहप्राप्त्यभावः। यावन्तः क्रूरग्रहाः द्वितीयदशमचतुर्थद्वादशनाथैः सहितास्त्रिकस्थाः तावन्तो गृहाः जातस्य नुः = नरस्य वह्निवशगताः = दग्धाः, अत एव क्लेशदाः स्युः। अत्र धनेशादीनां चतुर्णां समुदितानामेकयोगो न विवक्षितः। त्रिकभवने यो वा प्रान्त्यसद्भावे सावकाशत्वात् ॥ ९ ॥

भाषा०—चतुर्थेश यदि लग्नेश से युक्त होकर चतुर्थ भवन में हो तो उस मनुष्य को अकस्मात् ( अनायास ) घर की प्राप्ति होती है और सत्पुरुषों से मैत्री होती है। यदि चतुर्थ गृह में नहीं हो तो भवन की प्राप्ति नहीं होती है। और जितने पापग्रह द्वितीय, दशम, चतुर्थ, द्वादश इन स्थानों के स्वामी से युक्त होकर त्रिक ( ६।८।१२ ) स्थान में हो उतने ही घर अग्निवश होकर के ( जल करके ) जातक को क्लेश देते हैं ॥ ९ ॥

युक्ति—चतुर्थभाव गृह और सुहृद का है, अतः यह युक्त ही कहा गया है ॥ ९ ॥

अथ वाहनविरामयोगौ तच्छान्तिकरणं चाह—

यावन्तो वाहनस्थाः शुभविहगदृशां गोचरा नो भवेयु-
स्तावन्तो वा विरामाः परमगुणवतां वाहनानां नृणां स्युः ।
क्रूराः पश्यन्ति यानं व्ययनिधनगताश्चेत्तदा तद्वदेव
प्राज्ञैरादेश्यमेवं खलु शुभकरणं शान्तिकं वाहनानाम् ॥१०॥

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


क्रूरा इत्यनुषङ्गः, यावन्तः वाहनस्थाः शुभविहगदृशां गोचरा नो भवेयुः=शुभग्रहदृष्टा न स्युः, तावन्तः नृणां परमगुणवतां=प्रकृष्टगुणयुक्तानां वाहनानां विरामाः=विनाशाः स्युः। अथ द्वादशाष्टमगताः क्रूराः यावन्त इत्यनुषङ्गश्चतुर्थं पश्यन्ति चेत्तदा पण्डितैस्तद्वदेव दृष्टक्रूरग्रहे संख्याप्राये स्ववाहनानां विरामाः स्युरिति ज्ञेयम्। तत्र वाहनानां शुभकरणं शान्तिकं प्राज्ञैः आदेश्यं विधेयमिति शेषः। इति चतुर्थभावः॥ १०॥

भाषा०—जिसके जन्म समय शुभग्रह की दृष्टि से रहित जितने पापग्रह वाहन ( चतुर्थ ) स्थान में हों उतने ही उसके उत्तम गुणयुक्त वाहनों का नाश होता है। इसी प्रकार द्वादश, अष्टम भवन में स्थित होकर जितने पापग्रह चतुर्थ स्थान को देखते हों उतने ही वाहनों का नाश होता है। इस लिये बुद्धिमान उन वाहनों की शुभप्रद-शान्ति करने का आदेश करें॥ १०॥

अथ पञ्चमभावफलं विवक्षुर्निरुपायेन विद्याबुद्धियोगानाह—

विद्यास्थानाधिपो वा बुधगुरुसहितश्चेत्त्रिके वर्तमानो
विद्याहीनो नरः स्यादथ नवमनिजशेत्रकेन्द्रेषु तद्वान्।
बालत्वं वृद्धता वा यदि गगनसदां जन्मकाले तदा स्यात्
प्रज्ञामान्द्यं नराणामथ यदि विहगः स्वर्क्षगो दोषहृत्स्यात्॥

विद्यास्थानाधिपः=पञ्चमेशः केवलो, बुधगुरुसहितो वा त्रिके वर्तमानश्चेत्तदा जातो विद्याविहीनः। त्रिकस्थे पञ्चमेशे बुधगुरुयोगे विद्याद्यनुकूलो नास्तीति वा शब्देन द्योतितम्। अथ पञ्चमेशः पञ्चमनवमकेन्द्रेषु स्थितश्चेत्तदा जातः विद्यावान्। बुधगुरुयोगे विद्यावत्त्वं किमुत वक्तव्यमिति गम्यते। अथ जन्मकाले प्रज्ञायोगकर्तॄणां गगनसदां=ग्रहाणां बालत्वं वृद्धतां वा यदि तदा जातानां प्रज्ञामान्द्यं=अल्पबुद्धिः स्यात्। यदि बालो वृद्धो वा ग्रहः स्वक्षेत्रगः तदा दोषहृत्=प्रज्ञामान्द्यत्वप्रयोजकदोषं दूरीकुर्यादित्यर्थः॥ ११॥

भाषा०—अब पञ्चम भाव का फल कहते हैं—विद्या ( पञ्चम ) स्थान का स्वामी अकेला अथवा बुध, बृहस्पति से युक्त होकर त्रिक ( ६।८।१२ ) भवन में पड़े तो मनुष्य विद्याहीन होता है। यदि नवम

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


पञ्चम वा केन्द्र में पड़े तो विद्यावान् होता है। यदि बुद्धियोग कारक ग्रह जन्म समय में बाल हो अथवा वृद्ध हो तो उस मनुष्य की मन्द बुद्धि होती है। यदि बाल वृद्ध होकर भी ग्रह स्वक्षेत्र में हो तो दोष का नाश करता है। यहां भी युक्ति स्पष्ट ही है ॥ ११ ॥

अथ मूकत्वसन्तानाभावयोगानाह—

**वाक्स्थानेशो गुरुर्वा व्ययरिपुविलयस्थानगो वाग्विहीन-**
**श्चैवं पित्रादिकानां पतय इह युता मूकता स्याच्च ताभ्याम्।**
**वागीशात्पञ्चमेशस्त्रिकभवनगतः पुत्रधर्माङ्गनाथा**
**रन्ध्रद्वेष्यान्तिमस्था यदि जनुषि नृणामात्मजानामभावः ॥१२॥**

वाक्स्थानेशः = पञ्चमेशो, गुरुर्वा व्ययरिपुविलयस्थानगः = त्रिकस्थश्चेत्तदा वाग्विहीनः = मूकः स्यात्। अथ पित्रादिमूकतायोगमाह—एवं प्रकारेण पित्रादिभावानां दशमभावादिराशीनां पतयस्ताभ्यां = पञ्चमेशगुरुभ्यां युताः त्रिके तिष्ठन्ति चेत्तदा तातादीनां मूकत्वं स्यात्, आदिशब्दात् अनुजादयो ज्ञेयाः। अथ जन्मनि जीवात् = जीवाधिष्ठितराशेः पञ्चमेशः = त्रिकस्थः, पुत्रधर्माङ्गनाथाः = पञ्चमनवमलग्नेशाः जन्मलग्नात् त्रिकस्थाः यदि तदा पुत्राणामभावो वाच्यः ॥ १२ ॥

भाषा०—जिसके जन्म समय पञ्चमेश अथवा बृहस्पति यदि (६।८।१२) इन स्थान में हों तो वह वाग्विहीन (मूक) होता है। इसी प्रकार पित्रादि (दशम आदि) स्थान का स्वामी यदि पञ्चमेश तथा बृहस्पति से युक्त त्रिक में हो तो उसका पिता आदि मूक (गूँगा) होता है, (यथा दशमेश यदि पञ्चमेश और गुरु से युक्त त्रिक में हो तो पिता गूँगा होता है, ऐसे स्त्री बन्धु इत्यादि की मूकता बुद्धिमान् विचार करें) एवं यदि बृहस्पति से पञ्चमेश त्रिक (६।८।१२) भवन में हो तथा पञ्चमेश, नवमेश, लग्नेश यदि लग्न से (६।८।१२) इन भवनों में हो तो पुत्र का अभाव समझे ॥ १२ ॥

अथ सन्तानयोगमाह—

**किञ्चित्कालं विलम्बः शुभखगसहितास्तेऽथ कर्के सुतर्क्षे**
**चन्द्रे कन्याप्रजावान्प्रमिततनयवांश्चाथ देवेन्द्रपूज्यात्।**

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


क्रूरश्चेत्पञ्चमस्थो गुरुरपि सुतगः स्यात्तदापत्यहीन-
श्छायापुत्रः स्वगेहाद्यदि भवति सुते सूनुरेकस्तदानीम् ॥१३॥

ते = पुत्रधर्माङ्गनाथाः शुभखगसहिताश्चेत्तदा सन्तानोत्पत्तौ किञ्चित्कालं विलम्बः स्यात् । शुभग्रहदशान्तर्दशाबलापेक्षया विलम्ब इति भावः । अथ कर्कराशौ पञ्चमभावे चन्द्रश्चेत्तदा कन्याप्रजावान् अथवा प्रमित-तनयवान् = स्वल्पापत्यः स्यात् । अथ देवेन्द्रपूज्यात् = जीवात्पञ्चमस्थः क्रूरश्चेत् जीवोऽपि लग्नात्पञ्चमगस्तदापत्यहीनः = सन्तानरहितः स्यात् । यदि स्वगेहात् = स्वराशितः पञ्चमे छायापुत्रः = शनिश्चेत्तदा एकपुत्रः स्यात् । अत्र सम्पूर्णदृष्ट्या शुभकृतस्य शनेः स्वराशेः पुत्रभवने दृष्ट्या चैकपुत्रयोगस्तदा रविभौमयोः स्वगृहात्पञ्चमस्थयोरेकपुत्रत्वं किमुत वक्तव्यमिति गूढोऽभिप्रायः ॥ १३ ॥

भाषा०—यदि पूर्वोक्त लग्नेश, पञ्चमेश, नवमेश शुभग्रह से युक्त हो तो पुत्रोत्पत्ति में कुछ विलम्ब होता है । यदि पञ्चम भाव में कर्क राशि हो उसमें चन्द्रमा हो तो उसको बहुत कन्या होती हैं और अल्प पुत्र होता है । यदि बृहस्पति से पञ्चम स्थान में पापग्रह हो और बृहस्पति लग्न से पञ्चम स्थान में हो तथापि सन्तानरहित होता है । यदि शनैश्चर स्वभवन ( मकर, कुम्भ ) से पञ्चम स्थान हो तो एक पुत्र होता है ॥१३॥

यहाँ शनैश्चर यदि अपने भवन से पञ्चम स्थान में होकर एक पुत्र देता है तो रवि और मङ्गल भी अपने भवन से पञ्चम में रहकर एक एक पुत्र देंगे यह गूढ़ अभिप्राय है । और युक्ति स्पष्ट है ॥ १३ ॥

अथ अन्ययोगानाह—

कुम्भे चेत्पञ्च पुत्रास्तदनु च मकरे नन्दनेऽप्यात्मजाः स्यु-
स्तिस्रो भौमः सुतानां त्रितयमथ सुतादायको रौहिणेयः ।
इत्थं काव्यः शशाङ्को जनुषि च गुरुणा केवलेनैव पुत्राः
पञ्च स्युः केतुराह्वोः क्रियवृषभवने कर्कटे नो विलम्बः ॥१४॥

CC-0. Prof. Satya Vrat Shastri Collection.
नन्दने = पञ्चमभावे कुम्भे छायासूनुरित्यनुषङ्गः यदि तदा पञ्च पुत्राः

Digitized By Siddhanta eGangotri Gyaan Kosha


स्युः। मकरे आत्मजाः तिस्रः, मकरस्य स्त्रीराशित्वादिति भावः। भौमो मकरे चेदित्यनुषङ्गः सुतानां त्रितयं = त्रयं स्यात्। अथ रौहिणेयः = बुधः पञ्चमे सुतादायकः = कन्याप्रदः। इत्थं शुक्रश्चन्द्रोऽपि पञ्चमे सुतादायकः। एवं केवलेन ग्रहयोगरहितेन पञ्चमस्थेन गुरुणा पञ्च पुत्राः स्युः। पञ्चमे मेषे वृषे कर्के वा केतुराह्वोरेकतरे सति नो विलम्बः = सन्तानोत्पत्तौ प्रतिबन्धो न भवतीत्यर्थः। नो विलम्ब इत्यनेन सूचितं मकरकुम्भातिरिक्तराशौ पञ्चमे शनौ मकरमन्तरेण तत्रस्थे भौमे, क्रियादिराशीन् विहाय पञ्चमे राहौ वा केतौ सन्ततेर्विलम्ब एवेति भावः॥ १४॥

भाषा०—यदि जन्मसमय पञ्चम भवन में कुम्भराशि हो उसमें शनैश्चर हो तो पाँच पुत्र होता है। यदि पञ्चमस्थ मकर में शनि हो तो तीन कन्या होती है*। यदि मकर में मङ्गल होकर पञ्चम में हो तो तीन कन्या होती है, इसी प्रकार, बुध, शुक्र, चन्द्रमा पञ्चम भवन में कन्यादायक होते हैं। केवल बृहस्पति पञ्चम भाव में हो तो पाँच पुत्र समझे‡। यदि पञ्चम भाव में मेष, वृष अथवा कर्क हो तथा उसमें राहु अथवा केतु हो तो सन्तानोत्पत्ति में विलम्ब नहीं होता है†॥ १४॥

ननु कति वर्षाणि विलम्ब इत्याह—

**पापो वा वासवेज्यः सुखभवनगतः पञ्चमे वाऽष्टमे वा**
**शीतांशुः सन्ततेः स्यात्खगुणमितसमातुल्य एव प्रबन्धः।**
**यावन्तः पापखेटास्तनयगृहगताः सौम्यदृष्ट्या वियुक्ता-**
**स्तावद्वर्षप्रमाणो नियतमिह भवेत्सन्ततेर्वा विलम्बः॥१५॥**

पापग्रहो जीवो वा चतुर्थस्थः, पञ्चमेऽष्टमे वा चन्द्रो भवति तर्हि खगुणमितसमातुल्यः = त्रिंशद्वर्षमितप्रबन्धः सन्ततेरित्यनुषङ्ग प्रकृष्टो बन्धः। शुभग्रहदृष्ट्या विमुक्ताः यावन्तः पञ्चमस्थाः क्रूरग्रहाः स्युः "बलाधीनफलाः खगा" इत्युक्तप्रकारैः स्थानदिगादिबलरूपकैः किं तदिति ध्येयं तावद्वर्षप्रमाणः सन्ततेर्निश्चयेन विलम्बः स्यादित्यर्थः॥ १५॥

---

* टि०—मकर स्त्री राशि है इसलिये कन्यादायक है।

‡ यदि गुरु नीच में न हो तब। अन्यथा विलम्ब समझे।

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

भाषा०—पापग्रह वा बृहस्पति सुख ( चतुर्थ ) भवन में हो और पञ्चम अथवा अष्टम भवन में चन्द्रमा हो तो तीस ( ३० ) वर्ष पर्यन्त सन्तति होने में विलम्ब होता है। तथा शुभग्रह की दृष्टि से रहित होकर जितने पापग्रह पञ्चम भवन में हों उतने वर्ष सन्तति होने में निश्चय विलम्ब होता है। विलम्ब में वर्ष का प्रमाण प्रथम गर्भाधान समय से समझना चाहिये ॥ १५ ॥

अथ प्रतिबन्धकभञ्जकं सन्तानोपायमाह—

तत्प्राप्तिर्धर्ममूला तदनु बुधकवी शङ्करस्याभिषेका-
च्चन्द्रश्चेत्तद्वदेव त्रिदिवपतिगुरुर्मन्त्रयन्त्रौषधीनाम् ।
सिद्ध्या मन्दारसूर्या यदि शिखितमसी तत्र वंशेशपूजा
कार्याऽऽम्नायोक्तरीत्या बुधगुरुनवपाः क्षिप्रमेवात्र सिद्धिः ॥१६॥

तत्प्राप्तिः = सन्ततिप्राप्तिः धर्ममूला = श्रुतिस्मृतिविधिगतो धर्मः मूलं हेतुर्यस्याः सा, तथा—आदित्यसप्तमीव्रतशङ्कराराधनसन्तानगोपालमन्त्रजपहरिवंशश्रवणादिविहितधर्ममूलेति भावः। अत्र विशेषः। तदनु = तत्पश्चाद् बुधकवी विलम्बप्रयोजकौ चेत् शङ्करस्याभिषेकाद् = रुद्राध्यायोक्तमन्त्रकरणाभिषेकात् तत्प्राप्तिरित्यनुषङ्गः। चन्द्रश्चेत् पूर्ववज्ज्ञेयम्। गुरुश्चेत्तथा यदा तदा मन्त्रयन्त्रौषधीनां सिद्ध्या; सिद्धिशब्दो मन्त्रादिभिः प्रत्येकं सम्बध्यते। मन्त्रसिद्ध्या मन्त्रसिद्ध्या औषधीसिद्ध्येति। मन्त्राचरणेन=सन्तानगोपालमृत्युञ्जयादयो मन्त्रास्तदनुष्ठानेन, यन्त्राणि= मन्त्रग्रन्थोक्तानि तेषां सिद्ध्या, ओषध्यो लक्ष्मणाद्यस्तासां सिद्धिः विधिवदनुष्ठानसाध्यफलेत्यर्थः। शनिभौमसूर्यराहूणां मध्ये कस्यचित्प्रतिबन्धकत्वं तत्र वंशेशपूजा कुलदेवतापूजनम् आम्नायोक्तरीत्या कार्या। आम्नायशब्दोऽत्र वेदस्मृतिपुराणाद्युपलक्षणार्थः। तत्रापि विशेषः। बुधगुरुनवमस्थानपाः प्रतिबन्धकाश्चेदुक्तानुष्ठानात् क्षिप्रमेव सिद्धिः स्यादिति। इति पञ्चमभावः॥ १६ ॥

भाषा—अब सन्तान-प्राप्ति का उपाय कहते हैं—सन्तान की प्राप्ति में धर्म मूल ( कारण ) है। यदि बुध, शुक्र और चन्द्रमा सन्तान में विलम्ब करने वाले हों तो शङ्कर का अभिषेक ( शतरुद्रीय आदि )

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

द्वारा करने से, यदि बृहस्पति विलम्ब कारक हो तो यन्त्र, तथा मन्त्र (सन्तान गोपालादि मन्त्र) और आयुर्वेदोक्त औषध के सेवन से, सन्तति प्राप्ति होती है। यदि शनि, मङ्गल, सूर्य, केतु, राहु ये प्रतिबन्धक हों तो आम्नायोक्त (श्रुति-स्मृति-पुराणोक्त) रीति से कुलदेवता की पूजा करे। यहाँ भी यदि बुध, बृहस्पति और नवमेश विलम्बकारक हों तो सदनुष्ठान से शीघ्र ही कार्यसिद्धि होती है॥ १६॥

अथ रिपुभावफलं वक्तुकामस्तावद्व्रणरोगानाह—

**षष्ठेशे पापयुक्ते तनुनिधनगते नुः शरीरे व्रणाः स्यु-**
**श्चादेश्यं तज्जनित्रीजनकसुतवधूबन्धुमित्रादिकानाम्।**
**इत्थं तत्स्थानगामी शिरसि दिनमणिश्चानने शीतभानुः**
**कण्ठे भूमीतनूजो हृदि शशितनयो वाक्पतिर्नाभिमूले ॥१७॥**

पापग्रहयुते षष्ठेशे लग्नाष्टमगते सति नुः = मनुजस्य शरीरे व्रणाः स्युः। इत्थम् = उक्तप्रकारेण जनित्र्यादिभावानामीशे पापयुते तनुनिधनगते तेषां व्रणाः स्युरित्यादेश्यं वक्तव्यम्। अङ्गविशेषव्रणानाह—तत्स्थानगामी = तनुनिधनगतः षष्ठेशो दिनमणिः = सूर्यश्चेत् शिरसि व्रणः, चन्द्रश्चेन्मुखे, भौमश्चेत्कण्ठे, बुधश्चेद्धृदये, वाक्पतिश्चेन्नाभिमूले व्रणाः स्युः ॥१७॥

भाषा०—अब षष्ठभाव का विचार कहते हैं—जिसके जन्म समय षष्ठेश पापग्रह से युक्त होकर लग्न अथवा अष्टम भवन में हो तो उस मनुष्य के शरीर में व्रण (घाव) होता है। उसी प्रकार जननी, तात, सुत, बन्धु, मित्र, स्त्री, आदि भावों के स्वामी यदि लग्न अथवा अष्टम में हो तो जननी आदि को व्रण कहना। यदि षष्ठेश होकर उक्त स्थान में सूर्य हो तो शिर में, चन्द्रमा हो तो मुख में, मङ्गल हो तो कण्ठ में, बुध हो तो हृदय में, बृहस्पति हो तो नाभिमूल में व्रण कहना ॥१७॥

**नेत्रे पृष्ठे च शुक्रो दिनकरतनयः स्यात्पदे चाधरे चेत्**
**केतुर्वा सैंहिकेयस्तदनु तनुपतिर्भौमवित् क्षेत्रसंस्थः।**
**आभ्यामालोकितः सन् भवति हि कतिचित् स्थानगो वा तदानीं**
**नेत्रे रोगी नरः स्यात् भवत्पतियुतैर्वौरिकैर्ज्ञेयमेवम् ॥१८॥**

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


शुक्रश्चेन्नेत्रमूले पृष्ठे च, शनिश्चेत्पदे = चरणे, राहुः केतुर्वा अधरे व्रणाः स्युः इति पूर्वश्लोकेनाऽन्वयः। अथ नेत्रव्याधियोगः—तदनु = भौमबुधराशिस्थो लग्नेशः, भौमदृष्टः कतिचित्स्थानगोऽपि वा, यत्र कुत्र वा स्यात्तदानीं जातः नेत्ररोगी स्यात्। प्रवरमतियुतैर्हौरिकैरेवं ज्ञेयम् ॥१८॥

भाषा०—शुक्र षष्ठेश होकर लग्न अष्टम में हो तो नेत्र और पीठ में, शनि हो तो पाँव में, केतु और राहु हो तो अधर ( निचले ओठ ) में व्रण कहे। यदि मङ्गल, और बुध की राशि ( मेष, वृश्चिक, मिथुन, कन्या ) में लग्नेश हो या लग्नेश किसी राशि में मङ्गल बुध से देखा जाता हो तो वह मनुष्य नेत्र रोगी होता है। इस प्रकार उत्तम बुद्धि वाले ज्यौतिषियों को समझना चाहिये ॥ १८ ॥

अथाऽन्ययोगाः—

षष्ठेशे लग्नयाते भवति हि मनुजो वैरिहन्ता धनस्थे
पुत्रात्तार्थोऽतिदुष्टः सहजभवनगे ग्रामदुःखाकरः स्यात्।
नाभिस्थाने च रोगी तनु निधनपती शत्रुभावस्थितौ ना
नेत्रे वामेतरे स्यादसुरकुलगुरुः सूर्यजस्त्वङ्घ्रिरोगी ॥१९॥

षष्ठभावाधिपे लग्नस्थे जातः शत्रुहन्ता स्यात्। धनस्थे षष्ठेशे पुत्रात्तार्थः = पुत्रेणात्तः गृहीतः अर्थो धनं यस्य सः पुत्रहृतधन इत्यर्थः, अतिदुष्टश्च स्यात्। सहजभवनगे ग्रामस्य दुःखकरः, नाभौ रोगी च स्यात्। लग्नाष्टमपती षष्ठस्थौ ना = पुमान्: नेत्ररोगी स्यात्। अत्र वामेतरशब्दोपादानदत्र वाम इति गम्यते। शुक्रः षष्ठेऽष्टमे इतरे दक्षिणनेत्रे रोगी। शनिः पृष्ठे चरणे रोगी स्यात् ॥ १९ ॥

भाषा०—जिसके जन्म समय षष्ठेश लग्न में हो वह मनुष्य शत्रु को मारने वाला होता है। यदि धन ( २ ) भाव में हो तो उसका धन पुत्र छीन लेता है और अति दुष्ट होता है। यदि षष्ठेश सहज ( ३ ) भाव में हो तो ग्रामजनों को दुःख देनेवाला होता है और उसकी नाभि में रोग होता है। लग्नेश और अष्टमेश यदि षष्ठ भाव में हो तो वाम नेत्र में रोग होता है। लग्नाष्टमेश शुक्र यदि षष्ठ भाव में हो तो वामेतर

CC-0. Prof. Satya Vrat Shastri Collection

Digitized By Siddhanta eGangotri Gyaan Kosha

( दक्षिण ) नेत्र में रोग होता है। शनि हो तो पाँव में रोग होता है ॥ १९ ॥

शुक्र एकाक्ष, और शनि पङ्गु ग्रह है, अतः युक्ति स्पष्ट ही है ॥ १९ ॥

अथान्ययोगाः—

दन्ते दन्तच्छदे वा कुमुदपतिरिपुः संस्थितः षष्ठभावे
केतुर्वा लग्ननाथः कुजबुधभवने संस्थितः क्वापि दृष्टः।
स्वेन प्रत्यर्थिना वा भवति जनुषि चेदासनार्धे सरोग-
स्तौ भूमीसूर्यपुत्रौ यदि रिपुगृहगौ तद्भवः स्याद्गदो नुः ॥२०॥

राहुकेतू शत्रुभावे चेद्दन्ते दन्तच्छदे = ओष्ठे वा रोगी स्यात्। भौम-बुधराशिस्थितो लग्नेशः स्वेन प्रत्यर्थिना = स्वशत्रुणा पूर्णदृष्टः यत्र कुत्रापि स्यात्तदा आसनार्द्धे = गुदसमीपे वा रोगी स्यात्। यदि तौ भूमिसूर्यपुत्रौ रिपुगृहगौ = षष्ठभावसंस्थौ चेत्तदा तद्भवः नुः = पुरुषस्य गदो = रोगः स्यात्। भूमिपुत्रे रुधिरविकारः, शनौ वातरोगः स्यादित्यर्थः ॥ २० ॥

भाषा०—राहु अथवा केतु यदि षष्ठ भाव में हो तो दाँतों में या ओष्ठों में रोग होता है। यदि लग्नेश मङ्गल अथवा बुध की राशि ( मेष, वृश्चिक, मिथुन, कन्या ) में वा लग्नेश किसी भाव में अपने शत्रुओं से देखा जाता हो तो आसनार्ध ( गुदमार्ग ) के समीप रोग होता है। यदि मङ्गल और शनि षष्ठ भाव में हो तो तद्भव रोग ( अर्थात् मङ्गल से रुधिर विकार और शनि से वात-विकार ) होता है ॥ २० ॥

प्रालेयांशौ रिपुस्थे खलखगसहिते मानवो रोगवान् स्यात्
क्रूरैर्निष्पीडितश्चेत्तनुसदनगतः शीतरश्मिस्तदानीम्।
क्रूरे केन्द्रालयस्थे यदि शुभविहगैर्नेक्षिते रोगवान् स्यात्
तस्मिन् काव्यालयस्थे कुजगुरुकविभिर्नेक्षिते तद्वदेव ॥२१॥

तथा प्रालेयांशौ = चन्द्रे खलखगसहिते = पापग्रहयुक्ते शत्रुभावस्थे सति रोगवान् स्यात्। क्रूरैर्निष्पीडिते = शनिप्रभृतिभिः क्रूरग्रहैः योगेन दृष्ट्या वा पीडिते तनुसदनगते = लग्ने तस्मिन् शीतकरे = चन्द्रे तद्वत्

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


=रोगी स्यात्। शुभग्रहदृष्टिरहितः केन्द्रगः क्रूरश्चेद्रोगवान् स्यात्। तस्मिन् क्रूरे शुक्रराशिसंस्थे कुजशुक्रगुरुभिर्न दृष्टे तद्वदेव=रोगवानेव स्यात्। अत्र यद्यपि विशेषो नोक्तस्तथापि योगकर्तृगृहस्वामिकफवातपित्तादि-कोपजन्यो विशेषरोगो ज्ञेयः॥ २१॥

भाषा०—जिसके जन्म समय पापग्रहों के साथ चन्द्रमा षष्ठभाव में हो तो वह मनुष्य रोगी होता है। यदि वा पापग्रहों से पीडित चन्द्रमा लग्न में हो तो भी रोगी होता है। पापग्रह केन्द्र में हो शुभग्रह से नहीं देखा जाता हो तो भी जातक रोगी होता है। अथवा पापग्रह यदि शुक्र की राशि ( वृष, तुला ) में हो और मङ्गल, बृहस्पति, शुक्र इनसे देखा जाता हो तो भी रोगवान् होता है॥ २१॥

पुंल्लग्ने स्वीयतुङ्गे रिपुभवनपतौ वीक्षितेऽसन्नभोगै-
रङ्गे नूनं नराणामरिजनवशतः स्याद्गदो गूढरूपः।
रिःफस्थाने स्थिते चेदरिसदनपतौ सिंहिकापुत्रयुक्ते
किंवा सप्ताश्वयुक्ते परगृहवसतिर्नीचवृत्तिर्नरः स्यात्॥२२॥

षष्ठेशे पुंराशिलग्ने स्वोच्चे वा पापग्रहैर्दृष्टे सति नराणां=जातानां अङ्गे=शरीरे अरिजनवशतः=शत्रुजनकारितः गूढरूपः=प्रच्छन्नः गदो =रोगः स्यात्, अत्र ग्रहतुङ्गराशीनां प्रायः स्त्रीराशित्वात् पुंल्लग्ने वा शब्दप्रयोगे ज्ञायते। षष्ठेशो राहुयुतः यद्वा सूर्ययुक्तः द्वादशे वा स्थितः, तदा जातो नरः परगृहवासी नीचवृत्तिश्च स्यात्॥ २२॥

भाषा०—यदि षष्ठेश पुरुषराशि लग्न में अथवा अपनी उच्चराशि में हो और पापग्रहों से देखा जाता हो तो उस मनुष्य के शरीर में शत्रु के द्वारा निश्चय गूढ रूप से रोग होता है। यदि षष्ठेश द्वादश स्थान में राहु अथवा सूर्य से युक्त हो तो वह मनुष्य दूसरे के घर में रहने वाला और नीच कर्म करने वाला होता है॥ २२॥

अथ सप्तमभावफलं निरूपयिष्यन् विवाहयोगानाह—

यावन्तो वा विहङ्गा मदनसदनगाश्चेन्निजाधीशदृष्टा-
स्तावन्तो मुनिगाहारवथ शुभतियमा ज्ञेयमित्थं कुटुम्बे।

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


कार्यो होरागमज्ञैरधिकबलवतां खेचराणां हि योगा-
दादेश्यं तत्र वीर्यं रविविधुकुभुवामङ्गदिक्शैलसंख्यम् ॥२३॥

यावन्तो ग्रहाः सप्तमस्थाः = सप्तमेशेन दृष्टाः तावन्तो विवाहः नुः = पुरुषस्य ज्ञेयाः । सुमतिमता = जन्मलग्नाभिज्ञेन दैवज्ञेन एवमुक्तप्रकारेण कुटुम्बे = जनकभ्रात्रादौ ज्ञेयम् । होरागमज्ञैः = जातकशास्त्रविद्भिरधिकबलवतां ग्रहाणामेवं योगाद्विचारः कार्यः । तत्राधिकबलं रविविधुकुभुवां = सूर्यचन्द्रभौमानां, अङ्गदिक्शैलसंख्यमादेश्यं, सूर्यस्य षड् रूपाणि, चन्द्रस्य दशरूपाणि, भौमस्य सप्तरूपाणि, अन्येषां षड् रूपाण्येव अङ्गरूपाधिको बलीति पद्धतिवचनात् ॥ २३ ॥

भाषा०—अब सप्तम भाव का फल कहते हैं—मनुष्य के जन्म समय जितने ग्रह सप्तमभाव में हों और सप्तमेश से देखे जाते हों तो उतने ही विवाह उसको कहे । इसी प्रकार बुद्धिमान् उसके कुटुम्बों ( भ्राता पिता आदिकों ) के विवाह समझे । तथा होराशास्त्र के जानने वाले अधिक बलवान् ग्रह के योग ही से फल का आदेश करे । वहाँ रवि का बल ६, चन्द्रमा का १०, मङ्गल का ७, शेष ग्रहों का ६ है ॥ २३ ॥

केन्द्रस्था वा त्रिकोणे यदि खलु गृहिणीकारकाख्यानभोगाः
कामार्थेशौ निजर्क्षे परिणयनविधिः स्यात्तदानीं नुरेकः ।
जायाधीशः कुटुम्बाधिपतिरपि युतश्चेत्त्रिके गर्हिताख्यै-
र्यावद्भिः शुक्रयुक्तो नियतमिह भवेत्तावतीनां विरामः ॥ २४ ॥

गृहिणीकारकाः = सप्तमभावेशशुभग्रहाः "शुक्रेन्दुजीवशशिजैः सकलैस्त्रिभिर्वा द्वाभ्यां कलत्रभवने च तथैककेन । एषां गृहेऽपि च गणेऽपि विलोकिते वा सन्ति स्त्रियो मदनभावपतिस्वभावाः" । इति कल्याणवर्मवचनात् एते केन्द्रस्थाः वा त्रिकोणे स्युः, वा सप्तमद्वितीयपती स्वभवने स्यातां तदा जातस्य नुः = पुरुषस्य परिणयनविधिः = विवाहः एकः स्यात् । सप्तमभावाधीशः द्वितीयाधिपो वा शुक्रयुक्तः यावद्भिः क्रूरग्रहैर्दृष्टः सहितः त्रिके स्यात् तावतीनां स्त्रीणां विरामो = नाशः स्यात् ॥ २४ ॥

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


भाषा०—स्त्रीकारक ग्रह ( सप्तमेश और शुभग्रह ) केन्द्र (१।४।७।१०) अथवा त्रिकोण ( ५।९ ) में हो अथवा सप्तमेश और धनेश अपनी राशि में हो तो उस मनुष्य को एक विवाह हो। तथा सप्तमेश अथवा धनेश शुक्र सहित त्रिक ( ६।८।१२ ) भवन में स्थित होकर जितने पाप-ग्रहोंसे देखा जाता हो तो निश्चय उतनी ही स्त्रियों का नाश होता है॥२४॥

अथ गर्भाभावयोगानाह—

**लग्नस्थे सप्तसप्तौ दिनमणितनये कामगेऽथार्कमन्दौ**
**द्यूने चन्द्रे नभःस्थे न च यदि गुरुणालोकिते नो प्रसूते।**
**द्वेष्येशे मित्रमन्दौ द्विषि सितकिरणेऽस्ते बुधेनेक्षिते नो**
**सूते द्वेष्ये जलर्क्षे यदि कुज-रविजौ गर्भिणी स्यान्न नारी॥२५॥**

सप्तसप्तौ = सूर्ये लग्नस्थे, शनौ सप्तमे एको योगः। अथ सूर्य-शनी सप्तमे गुरुदृष्टिरहितश्चन्द्रो दशमे इति द्वितीयो योगः। अत्र नारी नो प्रसूते। द्वेष्येशः = शत्रुभवनस्वामी तथा मित्रमन्दौ = रविशनी च द्विषि = षष्ठे बुधेन दृष्टः सितकिरणश्चन्द्रोऽस्ते = सप्तमे अयं तृतीयो योगः। अत्र नारी नो प्रसूते। कुजशनी षष्ठे चतुर्थे यदि तदा जातस्य नारी गर्भिणी न स्यादिति चतुर्थो योगः। इति सप्तमभावः॥ २५॥

भाषा०—यदि सप्तसप्ति ( सूर्य ) लग्न में हो तथा शनि सप्तम भाव में हो ( १ ) अथवा सूर्य तथा शनि सप्तम भाव में और चन्द्रमा दशम भाव में बृहस्पति की दृष्टि से रहित हो ( २ ) अथवा षष्ठेश, सूर्य और शनि ये तीनों षष्ठ भवन में हों और चन्द्रया सप्तम भाव में बुध से देखा जाता हो ( ३ ) इन तीनों योग में से एक भी हो तो उसकी स्त्री को प्रसव न हो अर्थात् गर्भ हो भी सकता है परन्तु पूर्ण नहीं होता है। और यदि शनि, मङ्गल षष्ठ और चतुर्थ भवन में हो तो उसकी स्त्री गर्भवती भी नहीं होती है॥ २५॥

अथाऽष्टमभावः, तत्र कष्टकर्मकरादियोगमाह—

**रन्ध्रस्थानस्थिता वा स्थिरभवनगताः शुक्रवागीशसौम्याः**
**कृच्छ्राणां कर्मणां ना भवति हि नियतं कारकः स्तब्धभावः।**

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

**बाल्ये दुःखी नरः स्यान्निधनगृहपतौ लाभयाते सुखी स्याद्**
**पश्चात्पापेऽल्पमायुः शुभखगसहिते दीर्घमायुर्नराणाम् ॥२६॥**

शुक्रगुरुबुधाः अष्टमस्थाः, स्थिरराशिगता वा तदा जातः ना = पुरुषः नियतं = नियमेन कष्टकर्मणां कर्ता स्यात्। स्तब्धभावः = कठिनचित्तश्च स्यात्। अष्टमभावेशे लाभगे बाल्ये = बाल्यावस्थायां दुःखी पश्चात्सुखी स्यात्। लाभगेऽष्टमेशे पापे अल्पायुः स्यात्। तस्मिन्नेव शुभग्रहयुक्ते जातानां दीर्घमायुः स्यात्॥ २६ ॥

भाषा०—जिसके जन्म समय बुध, बृहस्पति और शुक्र अष्टम स्थान में अथवा स्थिर राशि में हो तो निश्चय वह मनुष्य कठोर कर्म करनेवाला होता है और कठोर चित्त वाला होता है। तथा यदि अष्टम भाव का स्वामी लाभ ( ११ ) स्थान में हो तो वह मनुष्य बाल्यावस्था में दुःखी और अन्त में सुखी होता है। यदि एकादश स्थान में अष्टमेश पापग्रह हो तो अल्पायु होता है। वही ( अष्टमेश ) यदि शुभग्रह हो वा शुभग्रह से युक्त हो तो मनुष्य दीर्घायु होता है ॥२६॥

**कुर्यादायुर्गृहेशः खलखगयुगरिप्रान्त्यसंस्थोऽल्पमायु-**
**श्चेल्लग्नाधीशयुक्तो निधनभवनपः स्वल्पमायुः प्रदत्ते।**
**रन्ध्रस्थो वा चिरायुस्तदनु रविभवस्तत्र तद्वल्लयेशः**
**कोशस्थानस्थितश्चेज्जनुषि हि मनुजो वैरियुक् तस्करः स्यात् ॥२७॥**

आयुगृहेशः = अष्टमपतिः क्रूरयुक्तः षष्ठद्वादशगतः तदाऽल्पमायुः कुर्यात्। अष्टमपतिः लग्नेशयुक्तः अरिप्रान्त्यसंस्थः इत्युनुषङ्गः तदा स्वल्पमायुः प्रदत्ते। अष्टमेशः रन्ध्रस्थो वा चिरायुः प्रदत्ते। अष्टमेशः तदनु रविभवो वा तत्राष्टमे तद्वत् चिरायुः प्रदत्ते। लयेशः = अष्टमेशः कोशस्थानस्थितः = द्वितीये स्थितश्चेत्तदा तस्करो वैरियुक्तश्च स्यात्॥ २७ ॥

भाषा०—यदि जन्म समय अष्टमेश पापग्रह से युत होकर षष्ठ अथवा द्वादश भवन में हो तो जातक को अल्पायु करता है। यदि अष्टमेश लग्नेश से युत होकर ( ६।१२ ) में हो तो भी अल्प-आयु देता है। और अष्टमेश अष्टम भवन में हो तो दीर्घायु करता है अथवा

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


शनि अष्टम भवन में हो तो वही फल (दीर्घायु) करता है। यदि अष्टमेश धन ( २ ) भाव में हो तो वह शत्रु से युक्त और चोर होता है ॥ २७॥

आयुर्देहाधिनाथौ निधनरिपुगतौ हीनवीर्यौ प्रसूतौ
संग्रामे कीर्तिशेषं व्रजति बलयुतौ चेत् तदा तज्जयाप्तिम्।
शुक्रेणान्दोलिकायास्तनुपविधुयुतो वाहनस्थाननाथो
मूर्तौ दन्तावलेन्द्रैरथ गुरुसहितः स्याज्जयो वाजिवाहैः ॥२८॥

प्रसूतौ = जन्मसमये-आयुर्देहाधिनाथौ = अष्टमलग्नपती हीनवीर्यौ अष्टमषष्ठगतौ तदा संग्रामे कीर्तिशेषं प्राप्नोति = संग्रामाभिमुखो युद्धं विहाय पञ्चत्वं प्राप्नोतीत्यर्थः। तावेवायुर्देहाधिनाथौ सबलौ चेद्विजयी भवति। चतुर्थेशः शुक्रेण युतश्चेत् आन्दोलिकायाः = शिबिकाया जयः शिबिकारूढो जयतीत्यर्थः। चतुर्थेशो लग्नेशेन चन्द्रेण च युतः मूर्तौ = लग्ने स्थितश्चेत्तदा दन्तावलेन्द्रैः = महागजैः जयः स्यात्। अथ चतुर्थेशो गुरुयुतः लग्ने चेत्तदा वाजिवाहैः = वाजिराजैः गजेन्द्रैश्च सह जयः स्यात्॥ इत्यष्टमभावः ॥ २८ ॥

भाषा०—जिसके जन्मकाल में अष्टमेश और लग्नेश बलहीन होकर अष्टम और षष्ठ भवन में हो तो वह मनुष्य रणभूमि में मारा जाकर अपनी कीर्ति का शेष करता है ( अर्थात् युद्ध-विमुख होकर मारा जाता है )। यदि लग्नेश और अष्टमेश बली हों तो विजय पाता है। यदि चतुर्थेश, शुक्र से युत हो तो दोलिका ( पालकी ) पर बैठकर और यदि लग्नेश और चन्द्रमा से युक्त हों तो गजेन्द्र पर बैठकर, और यदि बृहस्पति संयुक्त हो तो घोड़ों पर बैठकर विजय पाता है ॥ २८ ॥

अथ नवमभावः तत्र शुभयोगमाह—

भाग्येशो मूर्तिवर्ती सुरपतिगुरुणाऽऽलोकितो भूपवन्द्यो
लग्नस्थो वाहनेशो नवमपतिरुभौ पश्यतश्चेत्स्वगेहम्।
सर्वासामास्पदं स्यान्मनुज इह तदा सम्पदां वाहनेन्द्रो
रन्ध्रस्थानस्थितश्चेद्व्रजति हि मनुजो भाग्यराहित्यमेवम्॥२९॥

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

नवमभावेशो गुरुदृष्टः लग्नस्थश्चेत्तत्र जातो राजवन्द्यः = राजमान्यः स्यात्। लग्नस्थो वाहनेशश्चतुर्थाधिपो नवमपतिश्च तावुभौ = चतुर्थनवमपती, स्वभवनं = चतुर्थपतिश्चतुर्थं नवमपतिर्नवमं पूर्णदृष्ट्या पश्यतश्चेत्तदा सर्वासां = धनधान्यसुवर्णादिसम्पदां आस्पदं = आश्रयः मनुजः स्यात्। वाहनेशः अष्टमस्थस्तदा मनुजः भाग्यराहित्यं व्रजति। होराविद्भिरेवं प्रकारेण भाग्यराहित्ये नुः हीनानां शुभलक्षणवयोबलादिरहितानां वाहनानां प्राप्तिस्तदनु चपलताऽस्थिरता च ज्ञेयेत्यग्रिमेण सम्बन्धः ॥२९॥

भाषा०—जिसके जन्म समय नवमेश लग्न में हो और बृहस्पति से देखा जाता हो तो वह मनुष्य राजा लोगों से वन्द्य ( प्रणाम करने के योग्य ) होता है। चतुर्थेश और नवमेश दोनों लग्न में होकर अपने २ भवन को देखे तो वह मनुष्य सर्वसम्पत्तियों ( धन-धान्य-सुवर्णादिकों ) का आश्रय होता है। और यदि चतुर्थेश अष्टमस्थान में हो तो मनुष्य भाग्यरहित होता है † ॥ २९ ॥

**हीनानां वाहनानां तदनु चपलताप्राप्तिरेवं नराणां**
**ज्ञेया होरागमज्ञैरथ नवमपतौ लाभगे राजवन्द्यः।**
**दीर्घायुर्धर्मशीलस्तदनु धनवपुर्वाहनेशाः स्वगेहे**
**धर्मेशो लग्नवर्ती जनुषि यदि गजस्वामिसिंहासनानाम् ॥३०॥**

अथ नवमेशे लाभगे राजमान्यः दीर्घायुर्धर्मशीलश्च स्यात्। तदनु जनुषि धनवपुर्वाहनेशाः = द्वितीयलग्नचतुर्थपतयः स्वगेहे = लग्नेशो लग्ने, धनेशो धने, वाहनेशो वाहनभवने इत्यर्थः। धर्मेशो लग्नगतो यदि तदा गजस्वामिसिंहासनानां प्राप्तिरित्यनुषङ्गः। तत्र गजाः = हस्तिनः, स्वामिसिंहासनानां = राज्याधिष्ठेयसिंहासनं राज्यकार्येषु भद्रासनं तेषां प्राप्तिः स्यात्॥

भाषा०—और शुभ लक्षण-विहीन वाहनों की प्राप्ति होती है, और चञ्चलता होती है। इस प्रकार होराशास्त्र जानने वाला समझे। और यदि नवमेश लाभ (११) भवन में हो तो वह मनुष्य राजमान्य (राजगुरु आदि) होता है। और यदि धनेश धन भाव में, लग्नेश लग्न में वाहनेश चतुर्थ

† इसका सम्बन्ध आगे से है।

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


लग्नेश में तथा धर्मेश लग्न में हो तो हाथी और राजसिंहासनों की प्राप्ति होती है ॥ ३० ॥

योगानां स्यादमीषां प्रचुरबलयुतो योऽधिपस्तद्दशायां
लब्धिश्चान्तर्दशायामथ गुरुभृगुजौ वाहनाधीशयुक्तौ ।
केन्द्रेऽयाने त्रिकोणे त्वथ गुरुकवियुग्वाहनस्थानगो वा
भाग्याधीशः स्वराशौ भवति नरपतिर्वाहनव्यूहनाथः ॥३१॥

अमीषामुक्तवक्ष्यमाणानां योगानां योऽधिपः = योगकर्ता यो ग्रहः अधिकबलयुतस्तस्य दशायां अन्तर्दशायां लब्धिः=योगफललाभः स्यात् । अथ गुरुशुक्रौ वाहनेशयुतौ सन्तौ केन्द्रे अयाने = आगमे = एकादशे इत्यर्थः; त्रिकोणे स्यातामित्येको योगः । अथ गुरुशुक्रयुतो भाग्याधीशः भाग्ये चतुर्थे वा स्यात्तदाऽयं द्वितीयो योगः । अत्र योगद्वये जातः वाहनव्यूहानां = समुदायानां नाथः = ईशो नरपतिः स्यात् ॥ ३१ ॥

भाषा०—इन उपरोक्त-योगकारक-ग्रहों में जो अति बलवान् हो, उसी ग्रह की दशा और अन्तर्दशा में फल का लाभ होता है, और बृहस्पति, शुक्र दोनों चतुर्थेश से युक्त होकर केन्द्र अथवा एकादश वा त्रिकोण में हो अथवा नवमेश गुरु, शुक्र के सहित होकर चतुर्थ या नवम स्थान में हो तो वह मनुष्य सैन्य-समूह का स्वामी राजा होता है ॥३१॥

अथ चिन्तायोगाः—

कर्मस्थे क्षेत्रचिन्ता त्रिकभवनगते सौख्यचिन्ता महीजे
वागीशे यानभूषावसनहयभवा चामरच्छत्रचिन्ता ।
प्रालेयांशौ सिते स्यादथ मदनगते वाक्पतौ पुत्रचिन्ता
सन्तानस्थानयाते हिमकरतनये बुद्धिजाथ त्रिकोणे ॥३२॥

भौमे कर्मस्थे क्षेत्रचिन्ता = कर्षणबीजवापक्षेत्रसंस्कारादिप्रकारकक्षेत्रचिन्ता इत्यर्थः । त्रिकभवनगते = षष्ठाष्टमद्वादशे महीजे सौख्यचिन्ता = सकलविषयप्रयुक्तसौख्यचिन्ता स्यादित्यर्थः । वागीशे त्रिकस्थे वाहनभूषणवस्त्राश्वभवा चिन्ता स्यात् । चन्द्रे सिते वा त्रिकस्थे चामरच्छत्रचिन्ता

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


तत्प्राप्तौ रक्षणे च चिन्ता स्यात्। अथ वाक्पतौ = गुरौ सप्तमस्थे पुत्र-चिन्ता = पुत्रविषयकगोरक्षणादिचिन्तेत्यर्थः। बुधे पञ्चमे बुद्धिजा चिन्ता। सूर्ये त्रिकोणस्थे पितुर्बान्धवस्य च चिन्ता। शुक्रे सुतनवमसप्तमगे यात्रा-चिन्ता। अथ गुरौ नवमपञ्चमे पुत्रजा = पुत्रभवा चिन्ता स्यात्। चिन्ता-नाम येषां जनानां क्षेत्रादिसम्भवस्तेषां तद्विषयलाभालाभशुभानुकूल्यप्राति-कूल्यादिसंस्मृतिः। इति नवमभावः॥ ३२॥

भाषा०—अब चिन्तायोग कहते हैं—मङ्गल दशम स्थान में हो तो उस मनुष्य को खेती की चिन्ता (जोतना, कोड़ना, बीज बोना इत्यादि) होती है। यदि त्रिक (६।८।१२) भवन में हो तो सब प्रकार के सुख की चिन्ता, यदि त्रिक भवन में बृहस्पति हो तो वाहन, वस्त्र, भूषण, अश्व (घोड़ा आदि) की, यदि चन्द्रमा अथवा शुक्र त्रिक भवन में हो तो चामर, छत्र आदि की और बृहस्पति सप्तम भवन में हो तो पुत्र विषय की चिन्ता, यदि बुध पञ्चम स्थान में हो तो बुद्धि-सम्बन्धिनी चिन्ता होती है*॥ ३२॥

अथ दशमफलमर्धेनाह—

मार्तण्डे तातबन्धोरथ सुतनवमद्यूनगे दानवेज्ये
यात्राचिन्ता नराणामथ नवमसुते पुत्रजा वासवेज्ये।
कर्माधीशो विवीर्यो यदि जनुषि तदा सर्वकर्मास्पदं नो
गेहे स्वीये यदाऽसौ शुभविहगयुते मानवो मानशीलः॥३३॥

जनुषि कर्मभावेशो विवीर्यो = निर्बलश्चेत्तदा जातः सर्वकर्मास्पदं = सर्वकर्मणामास्पदं = स्थानं नो = सर्वकर्मसाधको न स्यात्। अर्थात्तु जनुषि कर्माधीशो बली चेत्सर्वाणि कर्माणि साधयेज्जात इत्यर्थः। यदा शुभग्रहयुतो दशमाधीशः स्वीयगेहे = दशमे चेत्तदा जातो मानवो मानशीलो = मानी भवेत्॥ ३३॥

भाषा०—सूर्य यदि त्रिकोण (९।५) में हो तो पिता और बन्धुओं की, यदि शुक्र (५।९।७) इन स्थानों में हो तो यात्रा की, यदि बृहस्पति (९।५)

CC-0. Prof. Satya Vrat Shastri Collection.

* टि०—"त्रिकोणे" का इसके आगे से सम्बन्ध है।

Digitized By Siddhanta eGangotri Gyaan Kosha


में हो तो पुत्रोत्पत्ति की चिन्ता ( लाभ होगा या न होगा.......इत्यादि ) होती है।

अब दशमभाव का फल कहते हैं—जिसके जन्म समय कर्मेश ( दशमेश ), निर्बल हो तो सब कामों का साधन नहीं होता है। और यदि कर्मेश अपने भवन में हो तथा शुभग्रह से युक्त हो तो वह मनुष्य मानी होता है ॥३३॥

अथ दीर्घमध्यायुर्योगानाह—

**लाभे केन्द्रे त्रिकोणे तनुनिधननभःस्थानपाः संस्थिता-**
**श्चेद्दीर्घायुः पापखेटाः पणफरहिबुकत्रिस्थिता मध्यमायुः।**
**हीनायुः प्रोक्तमेते यदि जनुषि नृणां स्युस्तदापोक्लिमस्था**
**रन्ध्रस्थानस्थितानां तनुपतिगगनस्वामिसूर्यात्मजानाम् ॥३४॥**

यदा नृणां जन्मसमये लग्नाष्टमदशमेशाः लाभे केन्द्रे त्रिकोणे च स्थिताश्चेद्दीर्घायुः स्यात्। पापग्रहाः पणफरचतुर्थतृतीयस्थिताः मध्यमायुः स्यात्। एते = पूर्वोक्ता आपोक्लिमस्थाश्चेदल्पायुः स्यात्। द्वात्रिंशद्वर्षादर्वाक् हीनायुः, ततो मध्यायुः। चतुःषष्ठ्यनन्तरं दीर्घायुर्ज्ञेयम्। लग्नेशदशमेश-शनीनां अष्टमस्थानस्थितानां मध्ये यो हीनः हीनबलस्तस्य दशापर्य-न्तमायुः स्यादित्युत्तरेण सम्बन्धः ॥ ३४ ॥

भाषा०—जन्म समय में यदि लग्नेश, अष्टमेश, दशमेश—ये लाभ (११) केन्द्र ( १।४।७।१० ) और त्रिकोण ( ९।५ ) में हो तो उस मनुष्य की दीर्घायु होती है। यदि पापग्रह पणफर ( २।५।८।११ ) हिबुक ( ४ ) और तृतीय भवन में हो तो मध्यमायु और यदि पूर्वोक्त ग्रह आपोक्लिम ( ३।६।९।१२ ) स्थान में हो तो अल्पायु होती है *। और अष्टम स्थान में स्थित लग्नेश, दशमेश और शनि इन तीनों में† ॥३४॥

**यो हीनस्तद्दशायुस्त्वथ निजभवने धर्मकर्मात्मजेशा-**
**श्चेत्स्युस्तेषां दशायां बहुलबलवशाद्धर्मबुद्धिर्नराणाम्।**

* ३२ वर्ष पर्यन्त अल्पायु, अनन्तर ६४ वर्ष पर्य्यन्त मध्यमायु, ६४ के बाद दीर्घ-आयु है। †आगे के श्लोक से सम्बन्ध है, इसलिये आगे का श्लोक देखो।

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


**हानिः स्यादन्यथारौ तनुनिधनपती भानुपुत्रेण युक्तौ**
**स्यातां स्वर्भानुना चेत्तदनु च शिखिना तद्दशायां व्रणाः स्युः ॥**

अथ धर्मकर्मात्मजेशाः = नवमदशमपञ्चमेशाः स्वभवने = नवमादिके स्युस्तदा तेषां योऽधिकवलस्तस्य दशायां जातस्य धर्मबुद्धिः स्यात्। अन्यथा परभवने यदा तेषां योऽधिकवलस्तद्दशायां धर्महानि स्यादित्यर्थः। लग्नाष्टमपती यदि शनिराहुकेतूनामन्यतमेन युतौ षष्ठस्थौ तद्दशायां = तनुनिधनपत्योरधिकवलस्य दशायां व्रणाः स्युः ॥३५॥

भाषा०—जो ग्रह बलहीन हो उसीकी दशा पर्यन्त आयु कहना और यदि धर्मेश, कर्मेश तथा पञ्चमेश—ये अपने २ भवन में हों तो इनमें जो बलवान् हो उसकी दशा में मनुष्यों को धर्मकार्य बुद्धि होती है। इससे अन्यथा अर्थात् दूसरे के घर में हो तो इनमें जो बली हो उसकी दशा में धर्महीन होती है, और यदि लग्नेश और अष्टमेश—ये दोनों शनि, अथवा राहु, केतु से युक्त होकर षष्ठभवन में हो तो जो बलवान् हो उसकी दशा में व्रण ( फोड़ा आदि ) होता है ॥३५॥

**यानेशस्तत्र संस्थो यदि भवति तदा यानहेतुर्मृतिः स्या-**
**च्चौराच्छस्त्रेण चिन्ता नवमभवनतो भाग्यजाता विधेया।**
**व्योम्नो भूपालभूषावसनहयमहत्कर्मणां प्राप्तिचिन्ता**
**लाभस्थानेऽखिलानां व्ययनिधनगृहात्कल्मषाणां विधेया ॥३६॥**

चतुर्थेशस्तत्र = षष्ठभावे चेत्तदा यानहेतुर्मृतिः स्यात्। चौराच्छस्त्रेण च मृतिः। तत्रेति अरिभावपरामर्शेन यानेशस्य शन्यादियोगो वक्ष्यते। अयमर्थः-शनियोगे यानहेतोर्मृतिः, राहुयोगे चौरान्मृतिः, केतुयोगे शस्त्रेण मृतिः। अथ संक्षेपादुक्तानां नवमादिभावानां सामान्यचिन्तालम्बनमुच्यते। नवमभावतो भाग्यजाता चिन्ता विधेया। अयं भावः भाग्ये यो ग्रहः, भाग्येशो यो ग्रहः, भाग्यभवनस्थो यो राशिस्तद्द्वारा केन्द्रग्रहात् भाग्यभवने शुभाशुभवर्गविवेकः। भाग्यभाग्येशबलाबलत्रमित्यादि विचार्य जातकशास्त्रविचारं परिभूय बुद्ध्या फलं वक्तव्यम्। तथाभिहितं कल्याण-

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


वर्मणा-'भाग्यर्क्षपतिः कस्मिन्को वा भाग्यर्क्षमाश्रितो विहगः ॥ बलवान्मध्यबलो वा इत्यादि" । तत्रान्यत्र-'भाग्ये बलिष्ठे यदि मेषराशौ चतुष्पदोत्थं प्रकरोति धर्मम् । वृषे बलिष्ठे बहुधेनुदाया युग्मे तथा ब्राह्मणभोज्यदाता ॥ स्यात् कर्कटे तीर्थपरश्च सिंहे जातो मनुष्यः परधर्मनिष्ठः ॥ यद्दृष्टिधर्मा मनुजो युवत्यां प्रसिद्धधर्मा तुलजो मनुष्यः' ॥ ३६ ॥

भाषा०—यदि चतुर्थेश शनि के साथ षष्ठभवन में हो तो वाहन से गिरने से मृत्यु होती है। यदि राहु से युक्त होकर रिपुभाव में हो तो चोर से, यदि केतु से युक्त होकर षष्ठभवन में हो तो शस्त्र से मृत्यु होती है। ( अब संक्षेप से नवमादि—भावों का विचार कहते हैं ) नवमभाव से भाग्य की चिन्ता, और दशम—भाव से राज्य, भूषण, वस्त्र, घोड़ा, और द्वादश तथा अष्टमस्थान से पापकर्म की चिन्ता (विचार) करनी चाहिये ॥

**लग्नस्थे रिःफनाथे भवति सुवचनो मानवो रूपवान् वा**
**स्वर्क्षे कार्पण्यबुद्धिर्बहुतरपशुमान् ग्रामयुक्तः सदा स्यात् ।**
**धर्मे तीर्थावलोकी बहुलवृषमतिः क्रूरयुक्ते च पापी**
**मिथ्याकोशान्तकृत्स्यान्नियतमिदमिति ज्ञेयमेवं सुधीभिः॥३७॥**

द्वादशभावाधिपे लग्नस्थे सति मानवः सुवचनः=सुवाङ्-माधुर्यो रूपवान्भवति । तथा स्वर्क्षे=स्वगृहे सति कृपणबुद्धिः, अनेकपशुयुक्तो ग्रामयुक्तश्च=ग्रामाधिकारयुक्तश्च स्यात् । तथा धर्मे=नवमे सति तीर्थावलोकी=तीर्थयात्रावान्, बहुलवृषमतिः=अत्यन्तधर्मबुद्धिश्च स्यात् । तथा पापग्रहयुक्ते सति पापी मिथ्याकोशान्तकृत्=वृथा सञ्चितद्रव्यनाशकृत्स्यात् । अस्माद्योगान्नियतं फलं ज्ञेयम् ॥ ३७ ॥

भाषा०—अब द्वादश भाव का बल कहते हैं-जन्म समय यदि द्वादशेश लग्न में हो तो वह मनुष्य मधुर वचन बोलने वाला और सुन्दर रूप वाला होता है। यदि स्वभवन में हो तो कृपण बुद्धि सहित तथा बहुत पशुओं को पालने वाला और गाँव का स्वामी ( अधिकारी ) होता है। यदि धर्म ( ९ ) भाव में हो तो तीर्थों का अवलोकन करने वाला और धर्म में बुद्धि रखने वाला होता है, यदि पापग्रह से युक्त हो तो

CC-0. Prof. Satya Vrat Shastri Collection

Digitized By Siddhanta eGangotri Gyaan Kosha


पापी और सञ्चित धन को व्यर्थ नाश करने वाला होता है। बुद्धिमान् इसको निश्चय समझे॥ ३७॥

हृद्यैः पद्यैर्गुम्फिते सूरितोषेऽलङ्काराख्ये जातके मञ्जुलेऽस्मिन्।
भावाध्यायः श्रीगणेशेन वर्यैर्वृत्तैर्युक्तः शैलरामैः प्रणीतः॥

इति जातकालङ्कारे द्वितीयोऽध्यायः॥ २॥

प्रसिद्धधर्मे निरतोऽष्टमे भवश्चापे तु शास्त्रे विहगः स्वधर्मा।
मृगे विरज्येत् सुधर्मतो ना कुम्भे तु पापादिभवे हि धर्मः॥ १॥
मीने बलिष्ठे शुभभावजातो तडागवापीभवधर्मनिष्ठः।
भाग्येशे लग्नगे भूपकर्मकारो धने धनम्।
बन्धुप्रियो भ्रातृभावे चतुर्थे पितृभक्तिमान्॥ २॥
कृती तु पञ्चमे षष्ठे जातो विकलकारकः।
सप्तमे सुभगस्त्रीमान् षण्ढः पापाष्टमे स्थिते॥ ३॥
स्वभे दाता देवभक्तौ दशमे नृपकार्यकृत्।
लाभे दीर्घायुरखिलो व्यये देशान्तरस्थितः॥ ४॥
स्वस्वामिदृष्टियुक्तश्चेत् स्वदेशफलदायकः॥ ५॥

मुनिभिरुक्तम्—होरागमश्च वलवान्येषां ते श्रेष्ठमानवाः।'
होरासारे—"भाग्ये खलाः स्वगृहगाः शुभदृष्टियुता यदि।
सौभाग्यसौख्ययुक्तस्य जन्म विन्द्याच्च भूपतेः॥ १॥
क्रूरा नीचारिभांशस्था भाग्येशेन च वीक्षिताः।
सर्वदा भाग्यहीनस्य जन्म विद्यान्न संशयः॥ २॥
लग्नगे भान्तरे राशौ महाभाग्यो हि भाग्यतः।
एकेन मध्यभागः स्यादभावे हीनभाग्यवान्॥ ३॥

गर्गजातके—'हन्ति पुण्यं च भाग्यं च कर्म पुण्यगतो नृणाम्।
तुङ्गे स्वर्क्षे सहस्रांशुः पुष्कलं धर्ममादिशेत्॥ ४॥
भाग्यभाग्यं भवेद्धन्यः पितृपक्षपरायणः।
धर्मे पूर्णो निशानाथः क्षीणः सर्वविनाशकृत्॥ ५॥
कुजे रक्तपदानन्दी भवेत्पशुपतिव्रती।
भाग्यहीनश्च सततं नरः पुण्यगृहं गते॥ ६॥

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


मन्दभाग्यो बुधे पापे शुभे सौम्ये तु धार्मिकः ।
महाभाग्यः शुभे जीवे तथा शुक्रे बलीयसि ॥७॥
दण्डप्रदो वक्रगतो नवमस्थे शनैश्चरे ।
स्वर्क्षोच्चगे शनौ भाग्ये राजा भवति धार्मिकः ॥८॥
राहौ धर्मगते जातः सत्यशौचविवर्जितः ॥९॥

अन्यत्र—भाग्याधिपश्चेद्यदि केन्द्रवर्ती आदौ वयस्येव सुखी मनुष्यः ।
त्रिकोणगः स्वोच्चगतोऽथवा स्यान्मध्ये वयस्यल्पफलप्रदः स्यात् ॥१॥
भाग्यस्य नाथे स्वगृहेऽथ मित्रगृहेऽथवा स्यात्स्वनवत्रिभागे ।
भाग्योदयं तस्य वदन्ति तज्ज्ञाः शुभग्रहेन्द्रैश्च युते क्षिते च ॥२॥
नीचस्थो वा शत्रुगेहस्थितो वा भाग्यस्वामी रिःफरन्ध्रारिगो वा ।
पापैः खेटः संयुतो वाऽथ दृष्टो भाग्यैर्हीनः स्याद्दरिद्रो सदैव ॥३॥
नवमभावपती रिपुरन्ध्रगो नवमभं रिपुदृष्टयुतं तथा ।
यदि तदा न च धर्मरतो नरः शुभखगैरथ धर्मरतो नरः ॥४॥
अबलेऽपि शुभे खेटे भाग्यस्थे धार्मिको नरः ।
शुभवर्गयुते भाग्ये शुभकर्मा यथाऽन्यथा ॥५॥

इत्यादिचिन्ता विधेया, तत्राऽऽह जातकसारावलीकारः—
होरेन्द्वोर्बलयोगाद्यो दशमस्तत्स्वभावजं कर्म ।
तस्याधिपतेश्च तथा वृद्धिर्ज्ञेया तथा हानिः ॥१॥
दशमे नक्षत्रपतिर्लग्नात्पुरुषस्य यस्य सम्भवति ।
सर्वारम्भो भवति हि विनिर्दिशेत्तस्य जातस्य ॥२॥

जातकसारे—'स्वस्थे खगे खलयुते खलजे नवांशे
स्वोच्चर्क्षगे स्वभवने सुखवृत्तयः स्युः ।
नीचारिभावगृहगेऽल्पसुखाल्पपुण्यो
दासोपचारभृतकानुचराश्च दासीः ॥३॥
धर्मभावे शुभक्षेत्रे शुभदृष्टे सुकर्मकृत् ।
पापेक्षिते पापकर्मा स्वामिदृष्टे तु मध्यमः ॥४॥
वैद्याः पुरोहिताः शास्त्रस्मृतिज्ञा वञ्चका नराः ।
जायन्ते कर्मगैः पापैः सौम्यग्रह-निरीक्षितैः' ॥५॥

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha



वराहः—'अर्थाप्तिः पितृपितृपत्निशत्रुमित्र—
भ्रातृस्त्रीमृतकजनादिवाकराद्यैः ।
होरेन्द्वोर्दशमगतैर्विकल्पनीया
भेन्द्वर्कास्पदपतिगांशनाथवृत्त्या ॥१॥
अर्कांशे तृणकनकोर्णभेषजाद्यैश्चन्द्रांशे कृषिजलजाङ्गनाश्रयाच्च ।
धात्वग्निप्रहरणसाहसैः कुजांशे सौम्यांशे लिपिगणितादिकाव्यशिल्पैः ॥२॥
जीवांशे द्विजविबुधाकरादिधर्मैः काव्यांशे मणिरजतादिगोमहिष्यैः ।
सौरांशे श्रमवधभारनीचशिल्पैः कर्मेशाध्युषितनवांशकर्मसिद्धिः ॥३॥
मित्रारिस्वगृहगतैस्ततस्ततोर्थान्तुङ्गस्थे बलिनि च भास्करे स्ववीर्यात् ।
राज्याधीशे केन्द्रगे सौम्यदृष्टे पापे केन्द्रे सुप्रतापप्रसिद्धः ।' इति ॥४॥
अथ लाभस्थाने अखिलानां वस्तूनां प्राप्तिचिन्ता विधेया ।
तत्र होराप्रदीपे—
स्वस्वामिसद्ग्रहयुते क्षित-आयवर्गैः सद्धर्मको भवति वस्तुविशेषलाभः ।
क्रूरे च दृष्टिसहिते न च तत्र लाभस्तद्वर्गकेऽप्यथ च मिश्रफलं विधत्ते ॥१॥
लाभे रविक्षितयुते रविवर्गयुक्ते चौराच्चतुष्पदयताच्च भवेत्प्रतापः ।
तद्वद्विधौ युवतितोयजनादिजातो भौमे सुवर्णमणिपावकशास्त्रजातः ॥२॥
सौम्ये क्षितेज्ञगण आयगृहं धनं स्याच्छिल्पादिकाव्यलिपिभिस्तुरगैःसकांस्यैः
जीवेक्षिताय गुरुवर्गयुताय गेहे यज्ञादिहेमहयनागरथादिमुख्यैः ॥३॥
शुक्रे क्षिताय शनिवर्गयुते महिष्यः लोहादिकृष्यवनकार्यभवा विवृद्धिः ।
नीचारिभार्कगखगोक्तफलं न दद्याद्धीतिप्रहोद्भवबले बलिनस्तु वाच्यम् ॥४॥
व्ययगृहान्निधनगृहाच्च मलिनकर्मणां चिन्ता विधेया । गर्गजातके—
"क्षीणेऽब्जे वा रवौ रिःफे धनं पुंसामथाहरेत् । बहुधार्थक्षयो भौमे ज्ञदृष्टेऽन्येषु सिद्धयः ॥१॥ नृपीडा न च सन्तप्तं परिवादेन पीडितः । नृशंसं पुरुषं चान्द्रिः कुरुते व्ययराशिगः॥२॥ उच्छ्रितव्ययकारी च व्ययगे देवतागुरौ । श्रद्धाहीनो घृणाहीनो व्ययगे भार्गवे नरः ॥३॥ व्ययस्थानगते मन्दे क्रूरेषु कुरुते रुचिम् । व्यये राहौ नीचकर्मा कपटी कुलदूषकः ॥४॥ व्यये भावे स्वामियुक्ते शुभदृष्टे च सत्यपि । कीर्तिमान् जायते मर्त्यो विपरीते विपर्ययः ॥३७॥" सुधीभिरिदं नियतं नियमेन ज्ञेयम् । अध्यायं

CC-0 Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


समापयति शालिनीवृत्तेन—श्रीगणेशेन भावाध्यायः शैलरामैर्वृत्तैः = सप्त-त्रिंशद्भिः श्लोकैरुक्तः ॥ ३८ ॥

भाषा०—श्री गणेश दैवज्ञ ने मनोहर पद्यों से युक्त, पण्डितों को तुष्ट करने वाले इस सुन्दर जातकालङ्कार में ३० उत्तम छन्द सहित भावाध्याय को बनाया ॥ ३८ ॥

इति जातकालङ्कारभाषाटीकायां द्वितीयोऽध्यायः ॥ २ ॥

—०—

## अथ योगाध्यायः ॥ ३ ॥

तत्र तावत् शुभाऽशुभयोगाध्याये विविधयोगान् योगान्तरं वक्तुं प्रतिजानीते शिखरिणीवृत्तेन—

गृहाधीना योगाः सदसदभिधाना जनमितां
ततो योगाधीनं फलमिति पुराणैः समुदितम् ।
अतो वक्ष्ये योगान् सकलगणकानन्दजनकान्
शुकास्यादुद्भूतं मतमिह विलोक्येऽथ रुचिरम् ॥ १ ॥

पुराणैः = वसिष्ठशुकपराशरप्रभृतिभिः प्रोक्तं फलं योगाधीनं, अतः सकलगणकानन्दजनकान् = अशेषज्योतिर्विदां प्रीत्युत्पादकान् योगान् वक्ष्ये । किं कृत्वा ? शुकास्यात् = शुकमुनिमुखादुद्भूतं रुचिरं = शोभनमतं विलोक्य = आलोच्य ॥ १ ॥

भावार्थ—मनुष्यों का शुभाशुभ योग ग्रहों के अधीन है, तथा वसिष्ठ, शुक, पराशरादि प्राचीनाचार्योक्त शुभाशुभ फल योगों के अधीन है; इसलिये शुकदेवजी के मुख कमल से उत्पन्न सुन्दर मत को देखकर समस्त गणकों को आनन्द देनेवाले योगों को कहता हूँ ॥ १ ॥

अथाऽनिष्टयोगानाह—

ऋक्षेशः क्षीणवीर्यः सुतनवमगतो मानवो मन्युमान् वै
राशीशे साङ्गनाथे रिपुनिधनगृहे भ्रान्तगो दुर्बलः स्यात् ।

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


धर्मद्वेष्याष्टनाथाः खलखचरयुताः स्थानके क्वापि संस्था-
स्तैर्दृष्टाः स्यात्तदानीं परपुरुषरता सुन्दरी तस्य पुंसः ॥ २ ॥

ऋक्षेशः = जन्मराशिनाथः सन् क्षीणबलः त्रिकोणगतश्चेन्मानवो जातः मन्युमान् = क्रोधी स्यात् । जन्मराशीशे साङ्गनाथे = तनुपतिसहिते त्रिकस्थे दुर्बलः स्यात् । यस्य नवमषष्ठाष्टमेशाः क्रूरग्रहदृष्टियुक्ताः यत्र कुत्रापि स्थिता यदि तदानीं तस्य भार्या जारगामिनी स्यात् ॥ २ ॥

भावार्थ—यदि जन्मराशि का स्वामी बलहीन होकर पञ्चम अथवा नवम स्थान में हो तो मनुष्य क्रोधी होता है। यदि जन्मराशि का स्वामी लग्नेश सहित त्रिक ( ६।८।१२ ) इन स्थानों में से किसी स्थानों में हो तो दुर्बल होता है। यदि नवमेश, षष्ठेश और अष्टमेश पापग्रह से युक्त होकर किसी स्थान में स्थित हो और पापग्रह से देखे जाते हों तो उस पुरुष की स्त्री पर-पुरुष-गामिनी होती है ॥ २ ॥

मातृस्थाने स्थितौ चेत्कुजविधुसहितौ षष्ठरन्ध्राधिनाथौ
स्यातां यस्य प्रसूतौ भवति खलु नरस्त्वन्यजातस्तदानीम् ।
क्वापि स्थाने स्थितौ स्तः कलुषखगयुतौ भाग्यषष्ठाधिनाथौ
चेदेवं राहुणा वा तदनु च शिखिना सँय्युतावन्यजातः ॥ ३ ॥

यस्य जन्मनि षष्ठाष्टमभवननाथौ कुजविधुयुतौ चतुर्थस्थौ स्यातां तदानीं स नरः अन्यजातः = जारजातः । तथा नवमषष्ठाधिनाथौ यत्र-कुत्रापि स्थितौ क्रूरग्रहयुतौ अथवा केवलेन राहुणा शिखिना वा युतौ स्यातां तदाऽन्यजातः । कलुषखगयुतावित्येतेन राहुः केतुरपि सर्वक्रूरयोगे विवक्षितः । अग्रिमश्लोके मन्दादीनां पार्थक्येन योगोपदेशात् कलुषखग-युतावित्यनेनैव सिद्धे राहुकेतुग्रहणं छन्दोऽनुरोधात् ॥ ३ ॥

भावार्थ—जिसके जन्म समय षष्ठेश और अष्टमेश ये दोनों मङ्गल तथा चन्द्रमा से युक्त होकर मातृभाव ( ४ ) में हों तो उसको परपुरुष से उत्पन्न कहना। और यदि भाग्येश तथा षष्ठेश–ये दोनों पापग्रह से युक्त होकर किसी स्थान में बैठे हों, अथवा केवल राहु या केतु से संयुक्त हों तो दूसरे से उत्पन्न समझना ॥ ३ ॥

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


युक्तौ मन्देन शूद्रादथ भवति विदा वैश्यतो भास्करेण
क्षत्राज्जातः सितेन त्रिदशपगुणा भूमिदेवात्प्रसूतः ।
दैत्येशेज्यौ स-पापौ मदनरिपुधनस्थानगौ चेत्परस्त्री-
गामी व्योमारिपौ स्तो गगनभवनगौ तत्पिताऽन्यारतः स्यात् ॥४॥

भाग्यषष्ठाधिनाथौ मन्देन युतौ शूद्राज्जातः = उत्पन्नो भवति । अथ बुधयुक्तौ वैश्याज्जातः । भास्करेण युतौ चेत्क्षत्रियाज्जातः, गुरुशुक्राभ्यां ब्राह्मणाज्जातः । बुधगुरुशुक्राणां कलुषखगयुतत्वे क्रूरैर्दृष्टत्वे तद्योगेन नीचत्वेनास्तङ्गतत्वेन क्रूरवर्गस्थत्वेन वा सुधीभिर्बोध्यम् । अथ शुक्र-बृहस्पती सक्रूरौ सप्तमषष्ठधनस्थानगतौ चेत्तदा परस्त्रीगामी स्यात् । दशमषष्ठाधिपौ दशमस्थौ तदा तत्पिता = जातस्य पिता अन्यारतः स्यात् = परस्त्रीगामी स्यात् ॥ ४ ॥

भावार्थ—भाग्येश और षष्ठेश–ये दोनों शनि से संयुत हों तो शूद्र से उत्पन्न समझे । यदि बुध से युक्त हों तो वैश्य से, रवि से युक्त हों तो क्षत्रिय से, शुक्र अथवा बृहस्पति से युत हों तो ब्राह्मण से उत्पन्न जातक को समझे । यदि शुक्र और बृहस्पति पापग्रह से युक्त होकर सप्तम, षष्ठ, और द्वितीय स्थान में हो तो वह मनुष्य परस्त्रीगामी होता है । यदि दशमेश और षष्ठेश दशम स्थान में हो तो उसका पिता पर-दार-गामी होता है ॥ ४ ॥

मूर्तीशः पापयुक्तो धनसदनगतश्चेत्तदा सज्जनस्त्री-
संयुक्तस्तत्पिता स्यात्खलविहगयुताः कामशत्रुस्वनाथाः ।
कोशस्थास्तद्वदेवं फलमिति विविधं भ्रातृपत्न्योश्च पित्रोः
स्थानेशाः क्वापि भावे तनुपतिसहिताश्चेत्पुमानन्यजातः ॥५॥

क्रूरयुक्तो लग्नेशः द्वितीयस्थश्चेत्तत्पिता सज्जनस्त्रीसंयुक्तः = साधुधनस्त्रीगामी स्यात् । सप्तमषष्ठद्वितीयभावेशाः क्रूरयुताः द्वितीयस्थाश्चेत्तद्वदेवं फलं, विविधमित्येवंप्रकारैर्विविधफलमिति ज्ञेयम् । सज्जनस्त्रियामासक्ति-दुराचारत्वं, अभक्ष्यभक्षकत्वमित्यादि ज्ञेयमिति भावः । तृतीयसप्तम-

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


चतुर्थदशमेशास्तनुपतिसहिता यत्र कुत्रापि स्थिताश्चेज्जातः पुमान् जारजातः ॥ ५ ॥

भावार्थ—यदि पापग्रहसहित लग्नेश द्वितीय भाव में हो तो उसका पिता सज्जन की स्त्री से प्रेम करता है, और सप्तम षष्ठ तथा द्वितीय भाव के स्वामी यदि पापग्रह सहित होकर द्वितीय स्थान में हो तो उसका पिता सज्जन स्त्रीगामी ( दुराचारी, अभक्ष्यभक्षी ) होता है यदि सहमेश, सप्तमेश, सुखेश, और दशमेश–ये लग्नेश के सङ्ग किसी स्थान में हों तो वह पुरुष दूसरे से उत्पन्न है ऐसा समझना ॥ ५ ॥

लग्नाधीशेन्दुपुत्रौ क्षितितनयनिशानायकौ क्वापि संस्थौ
युक्तौ स्वर्भानुना वा भवति हि मनुजः केतुना श्वेतकुष्ठी ।
आदित्यो भौमयुक्तस्तदनु शनियुतो रक्तकृष्णाख्यकुष्ठी
सार्को लग्नाधिनाथो व्ययरिपुनिधनस्थानगस्तापगण्डः ॥ ६ ॥

लग्नेशबुधौ, कुजचन्द्रौ वा राहुकेत्वन्यतरयुतौ तदा जातः श्वेतवर्णोपलक्षितकुष्ठरोगी भवति । तदनु भौमशनियुतः आदित्यश्चेद्रक्तवर्णकृष्णवर्णनामककुष्ठवान् स्यात् । सूर्ययुतो लग्नेशः त्रिकस्थश्चेत्तदा जातस्य तापान्वितो गण्डो रोगविशेषः स्यात् ॥ ६ ॥

भावार्थ—लग्नेश तथा बुध–ये दोनों अथवा मङ्गल और चन्द्रमा ये दोनों किसी भाव में राहु अथवा केतु से युक्त हों तो वह मनुष्य श्वेतकुष्ठी होता है । सूर्य यदि मङ्गल और शनि दोनों से युक्त होकर किसी भाव में हो तो मनुष्य लाल और श्यामवर्ण कुष्ठ वाला होता है । यदि सूर्ययुत ( शनि ), लग्नेश, द्वादश, षष्ठ अथवा अष्टम स्थान में हो तो तापगण्ड नामक रोग से संयुक्त होता है ॥ ६ ॥

ज्ञेयश्चन्द्रेण गण्डो जलज इह युतो ग्रन्थिशस्त्रव्रणः स्याद्
भूमीपुत्रेण पित्तं हिमकरतनयेनाथ जीवेन रोगः ।
आमोद्भूतस्ततश्चेद्भृगुतनययुतो नुः क्षयाख्यो गदः स्या-
च्चौरोद्भूतोऽन्त्यजाद्वा यमशिखितमसामंशुकृत् तन्वधीशः ॥७॥

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


चन्द्रेण युतो लग्नेशः त्रिकस्थश्चेज्जलजो गण्डः स्यात्। भौमयुतो लग्नेशः त्रिकस्थश्चेत्तदा ग्रन्थिशस्त्रव्रणः स्यात् = ग्रन्थ्युपलक्षितः शस्त्रजो व्रणः स्यादित्यर्थः। बुधयुतो लग्नेशः त्रिकस्थश्चेत्पित्तरोगः स्यात्। जीवेन युतो लग्नेशः त्रिकस्थश्चेत्तदा आमोद्भूतः = आमकोपजो रोगः स्यात्। शुक्रेण युतस्तत्र स्थितो लग्नेशस्तदा नुः = मनुष्यस्य क्षयाख्यो रोगः स्यात्। यमशिखितमसामेकयुक् = शनिराहुकेतूनां मध्ये एकेन युक्तो लग्नेशः त्रिकस्थश्चेत्तदा चौरजोऽन्त्यजादुत्पन्नो वा रोगः स्यात्। रजकचर्मकारादयोऽन्त्यजाः ॥ ७ ॥

भावार्थ—यदि लग्नेश चन्द्रमा युक्त त्रिक ( ६।८।१२ ) भवन में हों तो जल से उत्पन्न गण्ड रोग होता है। यदि मङ्गल युत लग्नेश त्रिक भवन में हो तो गांठ ( गँठिया ) अथवा अस्त्र से व्रण ( घाव ) होता है। बुधयुक्त हो तो पित्त, बृहस्पति से युक्त हो तो आँव रोग, शुक्र से युक्त हो तो क्षय नामक रोग, यदि शनि, केतु अथवा राहु—इन तीनों में से किसी एक से युक्त लग्नेश त्रिक भवन में हो तो चोर अथवा अन्त्यज ( चाण्डाल आदि ) हीन जाति से दुःख होता है ॥ ७ ॥

**चन्द्रो मेषे वृषे वा कुजशनिसहितः श्वेतकुष्ठी सरोगो**
**दैत्येजारेन्दुमन्दास्तिमिभवनगताः कर्कटालिस्थिता वा।**
**अङ्गे सौख्येन हीनः परमकलुषकृद्रक्तकुष्ठी नरः स्या-**
**द्वागीशो भार्गवो वा यदि रिपुगृहपो मूर्तिगः क्रूरखेटैः ॥ ८ ॥**

कुजशनियुतश्चन्द्रो मेषे वृषे वा यदि तदा नरः श्वेतकुष्ठी स्यात्। शुक्रभौमेन्दुशनयो मीनराशिस्था, यद्वा कर्कटवृश्चिकस्थाः तदा नरः शरीरसौख्यरहितः महापातकी रक्तकुष्ठी स्यात्। गुरुः शुक्रो वा षष्ठभावाधिपः क्रूरैर्दृष्टो लग्नस्थश्चेत्तदा वक्त्रशोफी = मुखाधिकरणकश्वयथुरोगयुतः स्यादित्यग्रिमश्लोकेन सम्बन्धः ॥ ८ ॥

भाषा०—यदि मङ्गल और शनि से युत चन्द्रमा मेष अथवा वृष में हो तो मनुष्य श्वेतकुष्ठवाला होता है और रोग सहित होता है। यदि शुक्र, मङ्गल, चन्द्रमा और शनि—ये मीन अथवा कर्क और वृश्चिक राशि

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

में हो तो शारीरिक सुख से रहित, महापाप करने वाला, रक्त कुष्ठी होता है। षष्ठभावाधीश होकर गुरु अथवा शुक्र लग्न में हो और पापग्रह से* ॥ ८ ॥

दृष्टश्चेद्वक्त्रशोफो त्वथ खलसहिता मीनकर्कालिभावा
लूताकारश्चिरं स्यात्परमगदकरः कुष्ठ एवं नराणाम्।
रिःफस्थानस्थितश्चेद्विबुधपतिगुरुर्गुप्तरोगी नितान्तं
भूमीमार्तण्डपुत्रौ व्ययभवनगतौ शत्रुगौ वा व्रणी स्यात् ॥९॥

अथ मीनकर्कवृश्चिकराश्युपलक्षिता भावाः क्रूरसहिता यदि तदा नराणां एवं प्रकारेण चिरं कुष्ठं स्यात्। तत्र प्रकारमाह—यत्र लूताकारकः सविशेषो जन्तुविशेषः रक्तकुष्टगदविशेषप्रकारः लूताकारककुन्नरः स्यात्। गुरुर्द्वादशस्थश्चेत् तदा गुह्यरोगी स्यात्। यद्वा वैद्याज्ञानरोगी स्यात्। भौमशनी व्यये षष्ठे वा स्यातां तदा व्रणी = व्रणयुतः स्यात् ॥९॥

भाषा०—† देखा जाता हो तो उसका मुख शोफरोग से युक्त रहता है। मीन, कर्क और वृश्चिक—इन राशियों में पापग्रह हों तो उस मनुष्य को लूताकार नामक कठिन रोग करनेवाला कुष्ठ होता है। यदि बृहस्पति द्वादश स्थान में हो तो मनुष्य गुप्तरोगी (जो रोग समझ में नहीं आवे उस रोग से युक्त) होता है। मङ्गल और शनि यदि द्वादश अथवा षष्ठ भाव में हों तो व्रण (फोड़ा आदि) से युक्त होता है ॥ ९ ॥

मेषे मीने कुलीरे तदनु च मकरे वृश्चिके मन्दचन्द्रौ
स्यातां क्रूरान्वितौ चेन्नवमभवनगौ मानवः स्याच्च खञ्जः।
लग्नस्थं पश्यतीन्दुं दिनमणितनयं भूमिजो द्यूनदृष्ट्या
बुद्धयाहीनो नरः स्याद्दिनविधुविवरे भूमिजश्चेत्तथैव ॥ १० ॥

क्रूरग्रहयुतौ चन्द्रशनी मेषमीनकर्कमकरवृश्चिकान्यतमराशिगतौ नवमभवनगौ चेन्मानवो जातः खञ्जः = खञ्जाख्यपादरोगी स्यात्। भूमिपुत्रः

* अग्रिम श्लोक से सम्बन्ध है।

† पूर्व श्लोक की टीका से सम्बन्ध है।

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


सप्तमदृष्ट्या लग्नस्थं चन्द्रं शनिं च पश्यति चेत्तदा नरः बुद्धया हीनः स्यात् । इनविधुविवरे = रविचन्द्रयोर्मध्ये भौमश्चेत्तथैव = बुद्धिहीनः स्यात् । इनशब्दो लक्षणया दिनकरपरो ज्ञेयः ॥ १० ॥

भाषा०—मेष, मीन, कर्क, मकर और वृश्चिक—इनमें से किसी राशि में पापग्रह सहित शनि और चन्द्रमा नवम भाव में पड़ता हो तो मनुष्य खञ्ज ( पाद रोग सहित ) होता है। यदि लग्नगत चन्द्रमा अथवा शनि को सप्तम दृष्टि से मङ्गल देखता हो तो वह मनुष्य बुद्धिहीन होता है। यदि रवि और चन्द्रमा के वीच में मङ्गल हो तो भी वही फल समझना ॥ १० ॥

प्रालेयांशौ तनुस्थे गगनसदनगे साधिकारेऽर्कसूनौ
दृष्टेऽस्मिन्कासदृष्ट्या हिमकिरणभुवा बुद्धियुङ्मानवः स्यात् ।
पृथ्वीसूनुं मृगाङ्कं तनुनिलयगतं पूर्णदृष्ट्येन्दुसूनुः
पश्येच्चेद्बुद्धिहीनस्त्वथ शशितनुपौ भूभुवा पीडितौ वा ॥११॥

चन्द्रे लग्ने साधिकारे = गृहहोराद्रेष्काणादिवर्गाधिपत्यसहिते शनौ दशमस्थे बुधेन पूर्णदृष्टेऽस्मिन्मानवो जातः बुद्धिमान् स्यात् । यद्वा चन्द्रलग्नेशौ मङ्गलेन पूर्णदृष्ट्या पीडितौ बुद्धिहीनः स्यात् ॥ ११ ॥

भाषा०—यदि चन्द्रमा लग्न में हो तथा स्वगृहादि षड्वर्गाधिकारी, शनि दशम भाव में हो और दोनों पर बुध की पूर्ण दृष्टि हो तो मनुष्य बुद्धिमान् होता है। तथा लग्नस्थ मङ्गल और चन्द्रमा को बुध पूर्ण दृष्टि से देखता हो अथवा चन्द्रमा तथा लग्नेश को मङ्गल पूर्ण दृष्टि से देखता हो तो इन दोनों योग में उत्पन्न मनुष्य बुद्धिहीन होता है ॥११॥

लग्नस्थे रौहिणेये तदनु रविशनी क्रूरदृष्टौ रिपुस्था-
वेकर्क्षे चैकभागे भवति गतिमतिर्दृष्टिहीनौ शुभानाम् ।
तिग्मांशौ वैरिनाथे खलविहगयुते तुर्यगे सूर्यसूनौ
हृद्रोगी वाक्पतौ वा भवति हृदि नरः कृष्णपित्ती सकम्पः ॥१२॥

लग्नस्थे बुधे तदनु क्रूरग्रहदृष्टौ शुभग्रहदृष्टिरहितौ रविशनी एकराशौ

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

अथवा एकभागे=चक्रस्य* पूर्वार्द्धे परार्द्धे वा एकत्रगौ षष्ठस्थौ चेत्तदा गतमतिः=नष्टमतिः स्यात्। षष्ठभावनाथे सूर्ये क्रूरग्रहयुते तुर्यगे सति हृदि कृष्णपित्तरोगी स्यात्। अथवा दुष्टैः पीडितो हृदि सकम्पः स्यात्॥१२॥

भाषा०—यदि बुध लग्न में हो, और सूर्य तथा शनि पापग्रह की दृष्टि से सहित और शुभ ग्रहों की दृष्टि से रहित एक राशि और एक अंश में होकर षष्ठ भवन में हो तो मनुष्य बुद्धिहीन होता है। और षष्ठेश होकर सूर्य पापग्रहयुक्त चतुर्थ भवन में हो तो मनुष्य हृदयरोगी होता है। यदि शनि अथवा बृहस्पति षष्ठेश होकर चतुर्थ भाव में हो तो कृष्ण-पित्तरोग युक्त, पापग्रह से दृष्ट हो तो दुष्ट से पीडित होकर हृदय में कम्प रोगवाला, मनुष्य होता है॥ १२॥

**दुष्टैर्वा पीडितः सन्नथ कुजरविजौ वाक्पतिर्बन्धुसंस्था**
**हृद्रोगः स्यान्नराणां व्रण इह नियतं क्लेशकारी शरीरे।**
**पातालस्थो महीजस्तनयनिलयगाः सूर्यवित्सैंहिकेया**
**रन्ध्रस्थो भानुपुत्रो यदि जनुषि तदा स्यान्नरो दुःखभागी॥१३॥**

अथ कुजः सूर्यजो गुरुश्च चतुर्थस्थो यदि तदा इह=अस्मिन् योगे हृद्रोगाद्धेतोर्नराणां शरीरे क्लेशकारी व्रणः नियमेन स्यात्। यदा जन्म-समये भौमश्चतुर्थस्थः, सूर्यबुधराहवः पञ्चमस्थाः, शनिः अष्टमस्थः, तदा जातो नरो दुःखभागी भवति॥ १३॥

भाषा०—यदि मङ्गल, शनि और बृहस्पति चतुर्थ भाव में हो तो उस मनुष्य को हृदयरोग और क्लेशकारक व्रण (घाव) शरीर में निश्चय होता है। यदि मङ्गल चतुर्थ भाव में हो और सूर्य, बुध, राहु पञ्चम भाव में हो तथा शनि अष्टम में हो तो मनुष्य दुःखभागी होता है॥ १३॥

**लग्नं पश्येन्निजर्क्षे यदि धरणिसुतः संस्थितः कातरः स्या-**
**च्छायासूनुर्नभःस्थो यदि निशिजननं तद्वदत्रापि वाच्यम्।**

---

* अयमर्थो नाऽत्र सङ्गच्छते, प्रथमं एकराशौ इति पाठात्, एकनवमांशे इत्येव युक्तो भाति। यत एकराशित्वादेकत्रकार्थं स्वतः सिद्ध्यति।

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


मूर्तौ भूमीतनूजे स्वजनकलहकृत् द्यूनगे स्वाधिकारा-
द्धीने भौमे वपुष्मान् परमयुधि रतस्तीक्ष्णभावश्च नूनम् ॥१४॥

स्वक्षेत्रस्थितो भौमो यदि लग्नं पश्येत्तदा जातः कातरः = भीरुः स्यात्। यदि शनिर्दशमस्थो रात्रौ जन्म चेदत्रापि तद्वद्वाच्यं = कातरः स्यादित्यर्थः। लग्नगे भौमे स्वजनकलहकरः स्यात्। स्वाधिकाराद्धीने = स्वगृहहोराद्रेष्काणादिरहिते सप्तमे भौमे वपुष्मान् दृढशरीरः = अत्यन्त-युद्धप्रीतिमान्, तीक्ष्णस्वभावश्च स्यात् नूनं = निश्चयेन ॥ १४ ॥

भाषा०—यदि स्वराशिस्थ मङ्गल लग्न को देखता हो तथा शनि दशम स्थान में हो और रात्रि में जन्म हुआ हो तो वह मनुष्य कातर (भयभीत) होता है। यदि मङ्गल लग्न में हो तो अपने बन्धुओं में कलह करनेवाला होता है। यदि अपने अधिकार (स्वोच्चादि) से हीन मङ्गल सप्तम भाव में हो तो वह सुन्दर शरीरवाला और सङ्ग्राम में प्रेम करने-वाला और तीक्ष्ण स्वभाव का होता है ॥ १४ ॥

पश्येतां कामदृष्ट्या धरणिविधुसुतौ चेन्मिथः स्यात्तदानी-
मुच्चाकारोऽथ चन्द्रं शनिरविमहिजाश्चेत्प्रपश्यन्ति शीतः।
क्षीणे प्रालेयभानौ धरणिजसहिते पापभूमिः खरः स्या-
न्मूर्तिस्थो द्यूनदृष्ट्या हिमकरतनयो वासवेज्यं प्रपश्येत् ॥१५॥

धरणिविधुसुतौ = भौमबुधौ मिथः = अन्योन्यं सप्तमदृष्ट्या पश्येतां तदानीं जात उच्चशरीरः स्यात्। अथ शनिरविभौमाश्चन्द्रं पश्यन्ति तदा जातः शीतलस्वभावः स्यात्। शीतलत्वं = जडत्वं = मूर्खत्वमित्यर्थः। क्षीणे चन्द्रे भौमसहिते पापभूमिः = पापकृत् खरस्तीक्ष्णस्वभावः स्यात्। मूर्तिस्थो बुधः सप्तमस्थं गुरुं पश्येत्तदा जातो हास्यासक्त इत्यग्रिमश्लोकेन सम्बन्धः ॥ १५ ॥

भावार्थ—यदि मङ्गल और बुध में परस्पर सप्तम दृष्टि हो तो जातक उच्च शरीरवाला होता है। यदि शनि, रवि और मङ्गल चन्द्रमा को देखते हों तो शीतल स्वभाव (मूर्ख) होता है। यदि क्षीण चन्द्रमा

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


मङ्गल से युक्त हो तो मनुष्य पापी और तीक्ष्ण स्वभाव होता है। यदि लग्नस्थित बुध सप्तमदृष्टि से बृहस्पति को देखता हो तो मनुष्य हास्यप्रिय होता है ॥ १५ ॥

**हास्यासक्तः, स-भौमे हिमकरतनये स्याच्छुभर्क्षे कुजज्ञौ**
**मन्दर्क्षे वार्कदृष्टौ नरपतिविदुषां रञ्जने कोविदः स्यात् ।**
**पश्येत्काव्यं सितांशुर्व्ययविलयरिपुस्थानगो विस्मयालुः**
**क्षिप्रं वाक्स्फूर्तिमान् स्यात् कुजबुधशशिनो वीर्यवत्खेटदृष्टाः ॥**

अथ भौमसहिते बुधे शुभर्क्षे=शुभग्रहराशौ यद्वा कुजज्ञौ सूर्यदृष्टौ मन्दराशिस्थौ तदा राज्ञां विदुषां च रञ्जने=हर्षोन्मुखीकरणे प्रवीणः स्यात् । त्रिकस्थः चन्द्रः शुक्रं पश्येत्तदा विस्मयालुः=विस्मययुक्तः स्यात् । कुजबुधेन्दवो बलिष्ठग्रहदृष्टाश्चेच्छीघ्रं यथा स्यात्तथा वचनस्फूर्तियुक्तः स्यात् ॥

भावार्थ—यदि मङ्गल सहित बुध शुभग्रह की राशि में हो, अथवा शनि की राशि ( मकर, कुम्भ ) में रहकर सूर्य की दृष्टि से युक्त हो तो वह मनुष्य राजा तथा विद्वानों को प्रसन्न करने में अत्यन्त चतुर होता है। यदि चन्द्रमा ( १२, ८, ६ ) इन भावों से किसी एक भाव में होकर शुक्र को देखता हो तो जातक विस्मयालु ( आश्चर्य सहित ) होता है। यदि मङ्गल, बुध और चन्द्रमा—ये बलवान् ग्रह से देखे जाते हों तो शीघ्र प्रत्युत्तर देनेवाला होता है ॥ १६ ॥

**शुक्रज्ञौ द्यूनयातौ गगनविलयगौ मानवः पुंश्चलः स्यात्**
**कामाज्ञामन्दिरस्थौ कविधरणिसुतौ तद्वदाज्ञाम्बुयातौ ।**
**काव्यारौ तद्वदिन्दोर्नभसि रविसुतादास्फुजिन्नीरयायी**
**तद्वत्कामास्पदस्था बुधसितशनयः स्वर्क्षगे भार्गवे हि ॥ १७ ॥**

शुक्रबुधौ सप्तमाष्टमदशमगतौ तदा मानवः पुंश्चलो=व्यभिचारी स्यात् । शुक्रभौमौ सप्तमदशमस्थौ तद्वत्=पुंश्चलः स्यात् । शुक्रभौमौ चतुर्थदशमगौ तद्वत्=पुंश्चलः स्यात् । चन्द्राद्दशमे शुक्रो शनेश्चतुर्थे शुक्रस्तदा तद्वत्=पुंश्चलः स्यात् । स्वराशिस्थे शुक्रे बुधशनयः सप्तमदशमस्थाः

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


तदा तद्वदित्यनुषङ्गः ॥ १७ ॥

भावार्थ—यदि शुक्र और बुध सप्तम, अष्टम, दशम भाव में हो (१) अथवा शुक्र और मङ्गल सप्तम, दशम भाव में हो (२) अथवा शुक्र मङ्गल चतुर्थ, दशम भाव में हो (३) अथवा चन्द्रमा से दशम स्थान में शुक्र हो तथा शनि से चतुर्थभाव में शुक्र हो (४) वा शुक्र, बुध, शनि दशम भवन में हों परञ्च शुक्र अपनी राशि में हो तो इन पांच योगों में उत्पन्न मनुष्य पुंश्चल ( परस्त्रीगामी ) होता है ॥ १७ ॥

**प्रालेयांशोः सिताद्वा दिनमणितनयस्तत्पुरोभाववर्ती**
**मूर्तौ चेच्चन्द्रशुक्रौ यदि तरणिसुतं पश्यतश्चायशाः स्यात् ।**
**शेफच्छेदो नराणामथ तपनसुते भूमिकेन्द्रेऽर्कयुक्ते**
**दृष्टे काव्योडुपाभ्यां यदि दिवसपतेश्चोपरागोऽत्र तद्वत् ॥१८॥**

चन्द्रात् शुक्राद्वा शनिस्तत्पुरोभाववर्ती=तदग्रिमभावे स्थितः चन्द्रशुक्रौ लग्नस्थौ शनि पश्यतश्चेत्तदा जातः अयशाः = अपकीर्तियुतः स्यात् । अथ सूर्यसुते = शनौ भूमिकेन्द्रे=लग्नस्थे शुक्रचन्द्रदृष्टे सति, दिवसपतेः=सूर्यस्य चोपरागो=ग्रहणं तदा शेफच्छेदः = लिङ्गच्छेदः तद्वदपकीर्तिः स्यात् ॥१८॥

भाषा०—यदि चन्द्रमा से वा शुक्र से अग्रिम भाव में शनि हो तथा लग्न में चन्द्रमा और शुक्र होकर शनि को देखते हों तो वह मनुष्य अयशभागी होता है। तथा सूर्य सहित लग्न में हो और शुक्र तथा चन्द्रमा से देखा जाता हो और सूर्य का ग्रहण हो तो इस समय में उत्पन्न मनुष्य को शेफ ( लिङ्ग ) छेदन और अयश होता है ॥ १८ ॥

**याते वक्रग्रहर्क्षं जनुषि भृगुसुते मानवस्तोषदायी**
**सीमन्तिन्या रतेः स्यान्न खलु मदनगं भार्गवं लग्ननाथः ।**
**पश्येत्स्वीयालयस्थो यदि रहसि तदा कामिनीतोषदाता**
**न स्यादेवं हिमांशुर्दिनकरसुतयुक् भौमतः खे सुखे वा ॥१९॥**

शुक्रे वक्रग्रहराशिगते सति मानवो जातः सीमन्तिन्या रतेः=सम्भोगाद्धेतोस्तोषदायी=सुखदायी=सुखदो न स्यात् । स्वीयालयस्थो लग्ननाथः

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


सप्तमगं भार्गवं यदि पश्येत्पूर्णदृष्ट्या इति शेषः, तदा जातः रहसि=रति-स्थाने कामिनीतोषदाता न स्यादिति। चन्द्रः शनियुतः भौमाच्चतुर्थे दशमे वा स्यात्तदा एवम्=उक्तप्रकारेण कामिनीतोषदाता न स्यादेव ॥ १९ ॥

भाषा०—यदि जन्म समय शुक्र वक्रीग्रह की राशि में हो तो वह मनुष्य स्त्री को सम्भोग से प्रसन्न करने वाला नहीं होता है। यदि लग्नेश अपनी राशि में स्थित होकर सप्तम भावस्थित शुक्र को देखता हो अथवा शनियुक्त चन्द्रमा यदि मङ्गल से दशम वा चतुर्थ गृह में हो तो वह मनुष्य सम्भोग से स्त्री को सन्तुष्ट नहीं कर सकता है ॥ १९ ॥

**क्षोणीपुत्रेण युक्तः प्रथमसुरगुरुर्लग्नतः षष्ठपोऽयं**
**कामाधिक्यं नराणां जनयति नियतं पापदृष्टो विशेषात्।**
**काव्ये स्वीयालयस्थे तदनु मिथुनगे कामवान् मानवः स्या-**
**न्मूर्तौ सप्ताश्वसूनौ धनुषि च वृषभे चेत्पुमानल्पकामः ॥२०॥**

प्रथमसुरगुरुः=शुक्रः भौमयुक्तोऽयं लग्नात् षष्ठपः=षष्ठभावाधिपः तदा जातानां नराणां, कामाधिक्यं=कामबलप्रचुरतां नियमेन जनयति। स=शुक्रः पापदृष्टश्चेद्विशेषात्कामाधिक्यं जनयति। तदनु शुक्रे स्वभवनस्थे मिथुनस्थे वा मानवः कामवान् स्यात्। सप्ताश्वपुत्रः=शनिः धनुषि वृषे वा लग्ने चेत्तदा मानवोऽल्पकामः स्यात् ॥२०॥

भाषा०—प्रथम सुरगुरु ( शुक्र ) मङ्गल से युक्त होकर षष्ठ भाव का स्वामी हो तो उस मनुष्य को कामोद्वेग बहुत होता है, यदि पापग्रह से देखा जाता हो तो विशेष करके काम का वेग होता है, यदि शुक्र अपनी राशि में हो या मिथुनराशि में हो तो मनुष्य कामी होता है। यदि शनि लग्न में होकर धनु वा वृष में हो तो वह मनुष्य अल्पकामी होता है ॥२०॥

**मन्दे नक्रेऽपभाषीत्यथ रिपुगृहपे वा सुधांशावदृश्ये**
**चेदर्धे संस्थितेऽङ्को भवति जनिमतां नेत्रयोः क्रूरयुक्ते।**
**पश्येत्क्षीणं न चन्द्रं यदि भृगुतनयः सूर्यजः पश्यतीन्दुं**
**स्वर्क्षे चन्द्रे नभस्थे यदि मदनगतैर्वीक्षिते पापखेटैः ॥२१॥**

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


शनौ मकरस्थे सति अपभाषी = अप्रयोजनबहुभाषी भवति । तदनु षष्ठभवननाथे चन्द्रे वा क्रूरयुते अदृश्यार्धे संस्थिते सति जनिमतां नेत्रयोरङ्कश्चिह्नविशेषो भवति । सप्तमभावभोग्यांशमारभ्याष्टमादिक्रमेण लग्नभुक्तांशपर्यन्तं दृश्यार्थं ज्ञेयम् । यदि क्षीणं चन्द्रं शुक्रो न पश्येत् शनिरिन्दुं पश्यति कर्कस्थे चन्द्रे दशमे सप्तमे वा स्थितैः क्रूरग्रहैर्दृष्टे तदा नूनं = निश्चयेन स्वल्पनेत्रः स्यादित्यग्रिमपद्येनाऽन्वयः ॥ २१ ॥

भाषा०—यदि शनैश्चर मकर में हो तो वह मनुष्य अपभाषी = अप्रयोजन भाषी होता है। तथा षष्ठेश वा चन्द्रमा पापयुक्त होकर अदृश्य चक्रार्ध में पड़े तो नेत्र में अङ्क ( चिह्न ) होता है। यदि क्षीण चन्द्रमा को शुक्र न देखता हो और चन्द्रमा को शनि देखता हो तथा चन्द्रमा अपनी राशि ( कर्क ) में हो तथा सप्तम दशमस्थित पापग्रह से देखा जाता हो तो मनुष्य निश्चय ही छोटे नेत्रवाला होता है ॥ २१ ॥

लग्न के भोग्यांश से आरम्भ कर २, ३, ४, ५, ६ भाव और सप्तमभाव के भुक्तांश पर्यन्त अदृश्य चक्रार्ध हैं। क्योंकि ये ६ भाव क्षितिज से नीचे में रहते हैं। शेष भाव दृश्य चक्रार्ध है ॥ २१ ॥

**स्यान्नूनं चाल्पनेत्रस्तदनु तनुगतं भूमिजं वा क्षपेशं**
**पश्येद्वाचस्पतिश्चेदसुरकुलगुरुः काणदृङ्मानवः स्यात् ।**
**विच्छाया तिग्मभानोः क्षितिभुवि च पुरोभागगे दृङ्नराणां**
**सौम्ये चिह्नं दृशि स्यादथ वपुषि लये भार्गवे क्रूरदृष्टे ॥२२॥**

तदनु लग्नस्थं भौमं चन्द्रं वा वाचस्पतिः शुक्रश्च पश्येच्चेत् मानवः काणनेत्रः स्यात् । तिग्मभानोः = सूर्यात् पुरोभागगे = अग्रगामिनि अस्ताभिलाषिणि भौमे नराणां दृक् विच्छाया = कान्तिरहिता स्यात् । सूर्यात् बुधे पुरोभागगे दृशि चिह्नं स्यात् । अथ भार्गवे = शुक्रे लग्नस्थेऽष्टमे वा क्रूरदृष्टे सति अश्रुपाताद्धेतोर्नेत्रपीडा स्यादित्यग्रिमश्लोकेन सम्बन्धः ॥२२॥

भाषा०—यदि लग्नस्थित मङ्गल अथवा चन्द्रमा को बृहस्पति वा शुक्र देखता हो तो जातक काणा ( एक आँख से अन्धा ) होता है। यदि सूर्य से अग्रिम भाव में मङ्गल हो तो उसकी दृष्टि कान्तिहीन होती

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

है। सूर्य से अग्रिम भाव में बुध हो तो जातक की आँख में चिह्न होता है। यदि शुक्र लग्न अथवा अष्टम भाव में पापग्रह से देखा जाता हो तो जातक की आँख में अश्रुपात से पीड़ा होती है ॥ २२ ॥

नेत्रे पीडाश्रुपातात्तदनु शशिकुजावेकभावे यदाक्ष्णो-
श्चिह्नं किञ्चित्तदानीं ग्रहबलवशतो दृश्यमेवं सुधीभिः ।
मार्तण्डे रिःफयाते तदनु नवमगे पुत्रगे वा खलाढ्ये
दृष्टे वा स्यान्मनस्वी सुविकलनयनः सूर्यजे व्याधियुक्तः ॥२३॥

तदनु चन्द्रभौमौ एकभागैकनवांशस्थौ तदा नेत्रयोः किञ्चिच्चिह्नं स्यात्। सुधीभिर्योगकर्तृग्रहबलवशात एवम् = उक्तप्रकारेणादेश्यं = वक्तव्यम्। तदनु क्रूरग्रहदृष्टे युते वा सूर्ये व्ययगे वा नवमे सति जातः सुविकलनेत्रो = अप्रशस्तनयनः स्यात्। सूर्यजे = शनौ क्रूरयुते दृष्टे वा क्रूरे द्वादशगे नवमपञ्चमगे वा व्याधियुक्तो रोगी स्यात् ॥ २३ ॥

भाषा०—यदि चन्द्रमा और मङ्गल एक भाव ( अथवा एक नवांश ) में हो तो दोनों नेत्रों में कुछ चिह्न होता है। इत्यादि ज्यौतिषी ग्रह के बल देखकर कहैं†। यदि सूर्य द्वादश, नवम वा पञ्चम भाव में स्थित होकर पापग्रहों से युक्त अथवा दृष्ट हो तो वह जातक मनस्वी और विकल नेत्र होता है। इस प्रकार ( द्वादश, नवम, पञ्चम भाव में पापग्रह से युक्त दृष्ट ) शनैश्चर हो तो जातक रोगी होता है ॥ २३ ॥

चन्द्रं पृष्ठोदयस्थं हिबुकगृहगतः सूर्यसूनुः प्रपश्ये-
दित्थं लग्नाधिनाथे क्रियभवनगते मानवो वामनः स्यात् ।
कोशे पीयूषभानुर्जलचरगृहगः सौरिणा सँय्युतो वा
मार्तण्डे भूमिकेन्द्रे यदि भवति तदा दद्रुमान् पूरुषः स्यात् ॥२४॥

पृष्ठोदयराशिगं चन्द्रं चतुर्थभावस्थः शनिः प्रपश्येत्। लग्नपे मेषराशिस्थिते जातो मानवो ह्रस्वकायः स्यात्। जलचरराशिस्थश्चन्द्रः द्वितीये

† ग्रह बली हो तो योगफल पूर्ण होता है, और निर्बल हो तो फल नहीं होता है। अर्थात् मध्यबल में अर्धफल होता है।

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


अथवा शनिना युक्ते अथवा सूर्ये लग्नगे यदि तदा पुरुषः दद्रुमान = कुष्ठ-युक्तः स्यात् ॥ २४ ॥

भावार्थ—यदि चन्द्रमा पृष्ठोदयराशि ( मेष, वृष, कर्क, धनु, मकर ) में हो और चतुर्थ भावस्थ शनि से देखा जाता हो तथा लग्नेश, मेष में हो तो जातक वामन ( छोटा शरीरवाला ) होता है। यदि जलचर राशिस्थ चन्द्रमा द्वितीय भाव में हो अथवा शनैश्चर से युक्त हो, अथवा सूर्य यदि लग्न में हो तो मनुष्य दद्रु ( दाद ) से युक्त होता है ॥२४॥

**दृष्टे क्रूरैर्न सौम्यैर्यदि रिपुगृहपे चोडुपे प्लीहवान् स्या-**
**देवं कामाङ्गनाथे तदनु रविसुतस्तुर्यगो नष्टदृष्टिः ।**
**प्लीही स्याल्लग्ननाथे दिनकरतनये क्रूरनिष्पीडिते चेत्**
**सौख्यायुङ्मानवः स्यात्तनुसदनगते प्लीहवान्हर्षहीनः ॥२५॥**

षष्ठभावाधिपे चन्द्रे सौम्यदृष्टिरहिते केवलं क्रूरैर्दृष्टे प्लीहपीडितः स्यात्। एवं कामाङ्गनाथे = सप्तमनाथे लग्ननाथे चन्द्रे केवलं क्रूरदृष्टे प्लीहवान स्यात्। पापग्रहैर्दृष्टः शनिश्चतुर्थश्चेन्नष्टदृष्टिः = अन्धः स्यात्। क्रूरग्रहैः निष्पीडिते दृष्ट्या योगेन वा विकलीकृते यद्वा विजिते लग्नेशे शनौ सौख्यायुक् = सौख्यरहितः स्यात्। लग्नगतेशनौ प्लीहवान् आनन्द-रहितश्च स्यात् ॥ २५ ॥

भाषा०—यदि चन्द्रमा षष्ठेश होकर शुभग्रह की दृष्टि से रहित हो केवल पापग्रह से देखा जाता हो तो प्लीहा ( तापतिल्ली ) नामक रोग से युक्त होता है। एवं सप्तमेश अथवा लग्नेश होकर चन्द्रमा पाप ग्रहों से देखा जाता हो तो प्लीहयुक्त होता है। यदि चतुर्थ भाव में स्थित शनि पापग्रह से देखा जाता हो तो मनुष्य नष्टदृष्टि ( अन्धा ) होता है। और लग्नेश होकर शनि पापग्रह से युक्त अथवा दृष्ट हो तो जातक सुख-रहित होता है। और लग्न में शनि हो तो प्लीह ( ताप-तिल्ली ) युक्त तथा हर्ष से रहित होता है ॥ २५ ॥

**क्रूराः केन्द्रालयस्था वपुषि च विकलः केन्द्रगौ पुष्पवन्तौ**
**किं वा लग्ने अथ श्येरकार्मिनतनयः श्रोणिभागेऽङ्गहीनः ।**

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


काव्यः पातालयायी सुरपतिगुरुणा क्वापि युक्तोऽर्कसूनु-
र्भौमो वा रौहिणेयो भवति हि विकलः श्रोणिभागे भुजेऽङ्घ्रौ ॥२६॥

यदा क्रूराः केन्द्रगास्तदा जातः वपुषि = शरीरे विकलः = विकलाङ्गः स्यात्। पुष्पवन्तौ = सूर्यचन्द्रौ केन्द्रगौ वा तदा विकलाङ्गः। अत्र पुष्पवन्तावित्युक्त्या चन्द्रसूर्ययोरेकराशिस्थत्वं विवक्ष्यते। चन्द्रस्य क्षीणत्वाद्योगेऽस्मिन् विकल इति भावः। लग्नस्थं शुक्रं शनिः पश्येत्तदा श्रोणिभागे = कटितटे अङ्गहीनः। गुरुसहितः शनिभौमो बुधो वा यत्र कुत्र स्थितस्तदा कटितटे हस्ते चरणे वा विकलः स्यात् ॥२६॥

भाषा०—यदि पापग्रह केन्द्र में हो तो जातक विकल शरीर वाला होता है। यदि सूर्य और चन्द्रमा दोनों एक राशि में होकर केन्द्र में हों तो भी विकल शरीर वाला होता है। यदि लग्नस्थित शुक्र को शनि देखता हो तो जातक को कटि भाग ( कमर ) में विकलता होती है। शुक्र चतुर्थ स्थान में हो और बृहस्पति से युक्त शनि, मङ्गल और बुध किसी भाव में हो तो जातक के कमर, हाथ तथा पाँव में विकलता होती है ॥२६॥

आयुः पुण्याधिनाथौ यदि खलखचरात्तुर्यगौ पापयुक्तौ
जङ्घावैकल्यवान् स्यात्कुजशनिसहिते सैंहिकेये च सूर्ये।
द्वेष्यस्थे तद्वदेवं शनिरिपुगृहपौ रिःफयातौ खलैश्चेद्
दृष्टौ तद्वत्तदानीं रविविधुरविजा वैरिरन्ध्रालयस्थाः ॥२७॥

निधननवमेशौ क्रूराच्चतुर्थगौ क्रूरयुतौ जङ्घावैकल्यवान् = अनूरुः स्यात्। राहौ भौमशनियुते षष्ठगे चकारात् भौमे शनियुते सूर्ये षष्ठगते तद्वत् पङ्गुः स्यात्। एवं शनिषष्ठभावेशौ क्रूरदृष्टौ व्ययस्थौ तद्वत् = पंगुः स्यात्। सूर्यविधुशनयः षष्ठाष्टमभावस्थाः तदानीं तस्य पञ्चशाखे = हस्ते आर्तिः = पीडा स्यादित्यग्रिमश्लोकेन सम्बन्धः ॥२७॥

भाषा०—यदि अष्टमेश और नवमेश पापग्रह से युक्त चतुर्थ भाव में हो तो जातक की जङ्घा में विकलता होती है ( अर्थात् पंगु होता है )। यदि मंगल और शनि से युक्त होकर राहु षष्ठ भाव में हो, अथवा शनि मंगल से युक्त सूर्य षष्ठ भाव में हो तो जातक पंगु होता है। यदि

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


शनि और षष्ठेश द्वादश भवन में पापग्रह से देखे जाते हों तो भी वही फल समझे। यदि रवि, चन्द्रमा और शनि ये षष्ठ और अष्टम भाव में हों तो जातक के हाथ में पीड़ा होती है ॥ २७ ॥

स्यादार्तिः पञ्चशाखे, तदनु दशमगे सूर्यसूनौ सिताढ्ये
क्लीबः स्यात्सूर्यसूनौ व्ययरिपुगृहगे शुक्रतः क्लीबरूपः।
पश्येत्सूर्यालयस्थो मदनभवनगं भूमिसूनुं सुधांशु-
श्चाऽर्कः काणश्च कर्के यदि शुभगृहपो मेषसिंहालिनक्रे ॥२८॥

तदनु शुक्रयुते दशमस्थे शनौ क्लीबो=नपुंसकः स्यात्। शुक्राक्रान्तराशेः व्ययषष्ठगे शनौ क्लीबरूपः=रूपेण क्लीबसदृशः, न तु क्लीबः। सिंहराशिस्थचन्द्रः सप्तमगं भौमं पश्येत्तदा काणः स्यात्। कर्कस्थः सूर्यः सप्तमगं भौमं पश्येत्तदा काणः, उभययोगेऽपि काणः स्याद्यदि नवमेशः मेषसिंहवृश्चिकमकरे स्यादिति सम्बन्धः ॥ २८ ॥

भाषा०—यदि शुक्र संयुक्त शनि दशम भाव में हो तो जातक नपुंसक होता है। यदि शुक्र से द्वादश भाव में शनि हो तो नपुंसक के समान होता है, वास्तव में नपुंसक नहीं होता है। यदि सप्तम भावस्थ मंगल को सिंहस्थ चन्द्रमा देखता हो अथवा कर्क स्थित सूर्य देखता हो तो जातक काणा होता है। यदि नवमेश मेष, सिंह वा मकर में हो तो उपरोक्त दोनों योग होते हैं ॥ २८ ॥

अन्योन्यं पश्यतश्चेत्तरणिहिमकरौ तत्तनूजौ मिथो वा
भूसूनुः पश्यतीनं समभवनगतं त्वज्ञचन्द्रौ यदौजे।
ओजर्क्षे युग्मराशौ हिमकरशशिजौ भूसुतेनेक्षितौ चेत्
पुंराशौ लग्नशुक्रौ तदनु हिमकरः क्लीबयोगाः षडेते ॥२९॥

सूर्यचन्द्रौ ओजर्क्षे युग्मराशौ इत्याकृष्यान्वयः। अन्योन्यं=परस्परं पश्यतः=ओजराशिगः सूर्यः समराशिगं चन्द्रं पश्यति तादृशश्चन्द्रः सूर्यं पश्यति अयमेको योगः। तत्तनूजौ=शनिबुधौ ओजराशिगावन्योन्यं पश्यतः द्वितीयो योगः। समराशिगं सूर्यं भौमः विषमराशिग इत्यर्थात्

CC-0. Prof. Satya Vrat Shastri Collection

Digitized By Siddhanta eGangotri Gyaan Kosha


सिद्धं, भौमं च सूर्यः अन्योन्यं पश्यतः इति तृतीयो योगः। लग्नचन्द्रौ विषमराशिगौ भौमेन अर्थात् समराशिगेन दृष्टौ इति चतुर्थो योगः। चन्द्रबुधौ क्रमेण विषमसमराशिगौ भौमेन वीक्षिताविति पञ्चमो योगः। लग्नशुक्रौ चन्द्रश्च पुंराशौ पुरुषग्रहराशिनवांशे स्थिताविति षष्ठो योगः। एते षट् क्लीवयोगा ज्ञेयाः। तदुक्तं सारावल्याम्—"अन्योन्यं रविचन्द्रौ विषमाविषमर्क्षगौ निरीक्षेते॥ इन्दुजरविपुत्रौ वा तथैव नपुंसकं कुरुतः॥१॥ वक्रो विषमगतोऽर्कं समगं चैवं परस्परालोकात्। विषमर्क्षे लग्नेन्दुः समराशिगतः कुजो विलोकयति॥२॥ शशिशशिजौ समविषमे भौमेन निरीक्षितौ भवतः। ओजनवांशकसंस्था लग्नेन्दुसितास्तथैवोक्ता" इति॥२९॥

भाषा०—अब छः प्रकार के नपुंसक योग कहते हैं—यदि विषम राशि में सूर्य, समराशि में चन्द्रमा हो और दोनों परस्पर देखते हों (१ योग); शनि विषम राशि में हो, बुध सम राशि में दोनों परस्पर देखते हों (२ योग); यदि वा समराशि में सूर्य, विषम राशि में मङ्गल हो दोनों में परस्पर दृष्टि हो (३ योग); लग्न और चन्द्रमा विषम राशि में हों इनको समराशिस्थ मङ्गल देखता हो (४ योग); विषमराशिस्थ चन्द्रमा और समराशिस्थ बुध हो, दोनों को मङ्गल देखता हो (५ योग); तथा लग्न, शुक्र और चन्द्रमा पुरुषराशि और पुरुष नवांश में हों तो ये ६ प्रकार के क्लीव (नपुंसक) योग होते हैं॥ २९॥

**आयुः स्थानोपयाते धरणिसुतयुते भार्गवे वातकोपात्**
**काव्ये भौमेन युक्ते कुजभवनगते भूमिजा मुष्कवृद्धिः।**
**भौमर्क्षे काव्यचन्द्रौ सुरपतिगुरुणा सूर्यजेनाथ दृष्टौ**
**नूनं स्यान्मानवानां जनुषि कललजा मुष्कवृद्धिर्नितान्तम्॥३०॥**

भौमयुते शुक्रेऽष्टमस्थे वातकोपान्मुष्कवृद्धिः = वृषणवृद्धिः स्यात्। भौमराशिगते भौमयुते शुक्रे भूमिसंसर्गात् वातकोपजा वृषणवृद्धिः स्यात्। येषां मानवानां जन्मसमये भौमराशिस्थौ शुक्रचन्द्रौ गुरुशनिदृष्टौ तेषां कललजा = कललदोषजा वृषणवृद्धिः अतिशयिता स्यात्। कललं = शुक्रशोणितमिश्रीभावः॥ ३०॥

भाषा०—यदि शुक्र मङ्गल से युक्त होकर अष्टम भाव में हो तो वात-

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


प्रकोप से अण्डकोष की वृद्धि होती है। यदि मङ्गल से युक्त शुक्र, मङ्गल की राशि में हो तो पृथ्वी के संसर्ग से वातकोप से अण्डवृद्धि होती है। जिसके जन्म समय में शुक्र और चन्द्रमा ये दोनों मङ्गल की राशि ( मेष, वृश्चिक ) में हों और बृहस्पति तथा शनि से देखे जाते हों तो कलल ( वीर्ययुक्त शोणित ) दोष से अण्डकोष की वृद्धि होती है ॥३०॥

क्रूरैर्दृष्टे विलग्ने सुविकृतरदनश्चापगोमेषसंज्ञे
खल्वाटः पापलग्ने धनुषि गवि तथालोकिते क्रूरखेटैः।
धर्मार्थान्त्यात्मजस्था यदि खलखचरा बन्धभाक्पूरुषः स्या-
देवं लग्ने क्रिये वा धनुषि गवि तथा रश्मिजं बन्धनं नुः ॥३१॥

धनुषि वृषे मेषे वा विलग्ने क्रूरदृष्टे विकृतदशनः = दन्तरोगी स्यात्। पापलग्ने = पापैर्युक्तं लग्नं पापलग्नं तस्मिन् यथा प्रागुक्तयोगेन साङ्कर्यं स्यात्। तस्मात् क्रूरग्रहयुक्ते धनुषि वृषे वा लग्ने क्रूरदृष्टे खल्वाटो = खलतिरोगी स्यात्। नवमद्वितीयद्वादशपञ्चमस्थाः क्रूराश्चेत्तदा बन्धभाक् पुरुषः स्यात्। एवं मेषे धनुषि वृषे वा लग्ने क्रूराक्रान्ते नुः = पुरुषस्य रश्मिबन्धनं स्यात्॥ ३१ ॥

भाषा०—यदि धनु, वृष वा मेष लग्न हो और पापग्रह से देखा जाता हो तो जातक दन्त रोग से युक्त होता है। पापग्रह युक्त धनु अथवा वृष लग्न हो और पाप ग्रह से देखा जाता हो तो खल्वाट = जिसके शिरपर बाल न हो = अर्थात् ( गंजा ) रोग से युक्त होता है। यदि पापग्रह नवम, द्वितीय, द्वादश और पञ्चम भाव में हो तो जातक बन्धन का भागी होता है। इस प्रकार मेष, धनु अथवा वृषलग्न पापग्रह से संयुक्त हो तो उस मनुष्य को रस्सी से बन्धन होता है ॥३१॥

दुर्गन्धिर्दानवेज्ये शनिभवनगते मानवो विग्रहे स्याद्
द्रेष्काधीशे बुधर्क्षे तदनु मकरगे तद्वदत्राथ काव्ये।
केन्द्रस्थे तेन युक् स्यादथ कविरविजौ स्वीयहद्दायुतौ चे-
त्तद्वच्चन्द्रेऽजगते तनुभवनगते चानने स्याद्विगन्धिः ॥३२॥

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

शुक्रे शनिराशिस्थे जातो = मानवो विग्रहे = शरीरे दुर्गन्धिः स्यात्। षष्ठाधिपे मिथुनकन्यामकरगे तद्वद्विग्रहे दुर्गन्धिः। अथ काव्ये = शुक्रे बुधर्क्षे तेन = बुधेन युक्ते केन्द्रगे सति तद्वद्विग्रहे दुर्गन्धिः। अथ शुक्रशनी स्वीयहद्दायुतौ=स्वत्रिंशांशगौ चेत्तद्वद्विग्रहे दुर्गन्धिः। अत्र छन्दोऽनुरोधात्त्रिंशांशो हद्दाशब्देनोपलक्षितः। मेषस्थे चन्द्रे लग्नगते मुखे दुर्गन्धिः स्यात्॥

भाषा०—शुक्र यदि शनि की राशि ( मकर, कुम्भ ) में हो तो उस मनुष्य के शरीर में दुर्गन्धि होती है। यदि वा षष्ठेश मिथुन, कन्या, मकर में हो तो भी शरीर में दुर्गन्धि होती है। शुक्र यदि बुध की राशि ( मिथुन, कन्या ) में बुध से युक्त होकर केन्द्र ( १।४।७।१० ) में हो अथवा शुक्र और शनि अपनी २ हद्दा ( अपमे २ त्रिंशांश ) में हो तो भी शरीर में दुर्गन्धि होती है। यदि मेषस्थित चन्द्रमा लग्न में हो तो मनुष्य के मुख में दुर्गन्धि होती है॥ ३२॥

अथ योगादृशां सुविचार्यैवं कर्तव्यं इत्युपजातिकमाह—

**एवं ग्रहाणां सदसत्फलानां योगाद् ग्रहज्ञैरनुयोजनोयम्।**
**शुभाऽशुभं जन्मनि मानवानां फलं सुमत्या प्रविचार्य नूनम्॥३३॥**

ग्रहज्ञैः = ग्रहाणां दीप्तदीनादिज्ञानवद्भिः मानवानां जन्मनि शुभाशुभफलं सुमत्या = ग्रहलग्नज्ञानसंस्कृतया बुद्ध्या विचार्य निश्चयेन वक्तव्यम्। तथोक्तं मृत्युलग्ने "दशभेदं ग्रहगणितं जातकमवलोक्य विशेषमपि यः। कथयति शुभमशुभं वा तस्य न मिथ्या भवेद्वाणी" ॥ १ ॥ तथा च प्रदर्शितं नोलकण्ठदैवज्ञैः—"स्वोच्चे दीप्तः समाख्यातो नीचे दीनः प्रकीर्तितः। मुदितो मित्रगेहस्थः स्वस्थश्च स्वगृहे ग्रहः॥ शत्रुगृहे स्मृतः सुप्तो जितोऽन्यैश्च निपीडितः। नीचाभिमुखगो यस्तु ग्रहः खिन्नस्तु स स्मृतः॥ सुवीर्यः कथितः प्राज्ञैः स्वोच्चाभिमुखगो ग्रहः। अधिवीर्यो निगदितः सुरश्मिः शुभवर्गगः॥ ३३ ॥

भाषा०—इस प्रकार ग्रहों की उच्च नीच दीनादि अवस्था जानने वाले दैवज्ञ जन्म समय में ग्रहों के शुभाशुभ योगों का विचार अपनी बुद्धि से करके शुभाशुभ फल कहै॥ ३३॥

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


हृद्यैः पद्यैर्गुम्फिते सूरितोषेऽलङ्काराख्ये जातके मञ्जुलेऽस्मिन् ।
योगाध्यायः श्रीगणेशेन वर्यैर्वृत्तैर्युक्तो रामरामैः प्रणीतः ॥३४॥

अध्यायं समापयति रामरामैः = त्रयस्त्रिंशद्भिः ॥ ३४ ॥

भाषा०—श्री गणेश कवि ने सुन्दर पद्य से बने हुए इस मनोहर जातकालङ्कार में ३३ श्लोक से युक्त योगाध्याय को बनाया ॥ ३४ ॥

इति जातकालङ्कारभाषाटीकायां योगाध्यायस्तृतीयः ॥ ३ ॥

—:०:—

## अथ विषकन्याध्यायः ॥ ४ ॥

अथ त्रिभिः पद्यैर्विशेषतो विषकन्यायोगानाह—

भौजङ्गे कृत्तिकायां शतभिषजि तथा सूर्यमन्दारवारे
भद्रासंज्ञे तिथौ या किल जननमियात्सा कुमारी विषाख्या ।
लग्नस्थौ सौम्यखेटावशुभगगनगश्चैक आस्ते ततो द्वौ
वैरिक्षेत्रानुयातौ यदि जनुषि तदा सा कुमारी विषाख्या ॥१॥

आश्लेषायां कृत्तिकायां तथा शततारकासु नक्षत्रेषु रविशनिभौमवारेषु भद्रासंज्ञके तिथौ = द्वितीया-सप्तमी-द्वादशीसंज्ञकतिथौ या कन्या जननं इयात् = जन्म प्राप्नुयात् सा विषाख्या-विषकन्या भवति। अथ नक्षत्र-वारतिथीनां प्रत्येकं क्रमेण योगः—यथा आश्लेषा रविर्द्वितीया प्रथमो योगः । कृत्तिका शनिः सप्तमी द्वितीयो योगः । शततारका भौमो द्वादशी तृतीयो योगः । एषु योगेषु जाता कन्या विषाख्येत्यर्थः । द्वौ शुभग्रहौ लग्नगौ एकः पापो दशमस्थः द्वौ पापौ शत्रुभावस्थितौ यदि तत्र कन्या जायते तदा सा विषकन्या ॥ १ ॥

भाषा०—अब विषकन्या योग कहते हैं—आश्लेषा, कृत्तिका, शत-भिषा—इन तीनों नक्षत्रों में रवि, शनि, मङ्गल इन वारों में भद्रा तिथि (२।७।१२) में जिस कन्या का जन्म होता है वह विषकन्या कही जाती है । यहाँ नक्षत्र वार और तिथि क्रम से लेकर योग समझना चाहिये, जैसे—आश्लेषा, रवि, द्वितीया (१ प्रथम योग) कृत्तिका, शनि, सप्तमी (२ योग)। शतभिषा, मङ्गल, द्वादशी (३ योग)।

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

उपरोक्त तिथि, नक्षत्र, वार-तीनों रहै तो विष योग होता है, अन्यथा नहीं। अथवा यदि जन्म समय दो शुभ ग्रह लग्न में हों, एक पाप ग्रह दशम में हो, दो पाप ग्रह षष्ठ भाव में हो तो वह कन्या भी विषनाम की होती है अर्थात् सबको नाश करनेवाली होती है ॥१॥

अथ क्रमेणापि नक्षत्रतिथिवारयोगानाह--

**मन्दाश्लेषा द्वितीया यदि तदनु कुजे सप्तमी वारुणर्क्षे**
**द्वादश्यां च द्विदैवं दिनमणिदिवसे यज्जनिः सा विषाख्या।**
**धर्मस्थो भूमिसूनुस्तनुसदनगतः सूर्यसूनुस्तदानीं**
**मार्तण्डः सूनुयातो यदि जनिसमये सा कुमारी विषाख्या ॥२॥**

अथ शनिवारे आश्लेषा द्वितीया, तदनु कुजवारे शततारका सप्तमी, दिनमणिदिवसे = रविवारे विशाखा द्वादशी, एषु योगत्रयेषु यस्याः जन्म सा विषकन्या भवति। यदि जन्मसमये भौमशनिसूर्याः क्रमेण नवमलग्न-पञ्चमस्थास्तदा सा कुमारी विषकन्या भवति ॥ २ ॥

भाषा०-अब क्रमानुसार नक्षत्र तिथि वार से योगों को कहते हैं— शनिवार, आश्लेषा नक्षत्र, द्वितीया तिथि ( १ योग ) मङ्गलवार, शत-तारका, सप्तमी ( २ योग ) रवि, विशाखा, द्वादशी ( ३ योग )—इन तीनों योगों में उत्पन्न कन्या विषरूपा होती है। यदि वा नवम में मङ्गल, लग्न में शनि, पञ्चम भाव में सूर्य जिसके जन्म समय में हो वह विषनाम की कन्या होती है ॥ २ ॥

अथ विषाख्यभङ्गमाह—

**लग्नादिन्दोः शुभो वा यदि मदनपतिर्द्यूनयायी विषाख्या-**
**दोषं चैवानपत्यं तदनु च नियतं हन्ति वैधव्यदोषम्।**
**इत्थं ज्ञेयं ग्रहज्ञैः सुमतिभिरखिलं योगजातं ग्रहाणा-**
**मार्यैरार्यानुमत्या मतमिह गदितं जातके जातकानाम् ॥३॥**

लग्नाचन्द्राद्वा मदनपतिः = सप्तमपतिः शुभग्रहो वा द्यूनयायी = सप्तम-स्थः विषाख्यदोषं तत्प्रयुक्तं अनपत्यं=सन्तानरहितत्वं वैधव्यदोषं च हन्ति =नाशयति। एवम् = इत्थप्रकारेण इह = अस्मिन् जातके आर्यानुमत्या

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


—दैवज्ञसभ्यानुमतेन जातकानां गदितं अखिलं योगजातं ज्ञेयम् । ग्रहाणां स्वभावविशेषाभिज्ञैरेवेदं योगजातं प्रवक्तुं क्षममिति भावः ॥३॥

भाषा०—अत्र विषयोगों का भङ्ग कहते हैं—यदि लग्न से अथवा चन्द्रमा से शुभग्रह अथवा सप्तमेश सप्तम भाव में हो तो विषाख्य दोष, अनपत्य दोष और वैधव्यादि दोषों को नाश करता है। इस प्रकार ग्रहगति को जाननेवाले बुद्धिमान् मान्य ज्यौतिषी ग्रहों का योगफल समस्त विचार करें। इस जातक में माननीय दैवज्ञों की अनुमति से सब फल कहा गया है ॥ ३ ॥

हृद्यैः पद्यैर्गुम्फिते सूरितोषेऽलङ्काराख्ये जातके मञ्जुलेऽस्मिन् ।
कन्याध्यायः श्रीगणेशेन वर्यैर्वृत्तैर्युक्तौ वह्निसंख्यैर्विषाख्यः ॥४॥

अध्यायं समापयति हृद्यैरित्यादिना ॥ ४ ॥

भा०—श्रीगणेश कवि ने मनोहर पद्य से बने हुए पण्डितों को सन्तुष्ट करनेवाले इस जातकालङ्कार में तीन श्लोक से कन्याध्याय को बनाया ॥४॥

इति जातकालङ्कारभाषाटीकायां चतुर्थोऽध्यायः ॥४॥

—०—

## अथायुर्दायाध्यायः ॥ ५ ॥

आयुर्मूलं जन्मिनां जीवनं च ह्याजीवानां निर्जराणां सुधेव ।
एवं प्राहुः पूर्वमाचार्यवर्यास्तस्मादायुर्दायमेनं प्रवक्ष्ये ॥१॥

भाषा०—अत्र आयुर्दायाध्याय कहते हैं—जिस प्रकार देवताओं के लिये अमृत है उसी प्रकार प्राणियों का जीवनमूल आयुर्दाय है, ऐसा प्राचीन आचार्यों ने कहा है, इसलिये आयुर्दायाध्याय को कहते हैं ॥१॥

लग्नाधीशोऽतिवीर्यो यदि शुभविहगैरीक्षितः केन्द्रयातै-
र्दद्यादायुः सुदीर्घं गुणगणसहितं श्रीयुतं मानवानाम् ।
सौम्याः केन्द्रालयस्था जनुषि च रजनीनायके स्वीयतुङ्गे
वीर्याढ्ये लग्ननाथे वपुषि च शरदां षष्टिरायुर्नराणाम् ॥२॥

लग्नाधीशो —लग्नस्वामी केन्द्रयातैः—लग्नचतुर्थसप्तमदशमस्थैः

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

शुभग्रहैर्दृष्टः अतिवीर्यः = अधिकतरबलस्तदा जातानां = मानवानां गुणगणैः सहितं = गुणसमुदायैर्युतं श्रीयुतं = लक्ष्मीयुतं च सुदीर्घं आयुः दद्यात्, सौम्याः = बुधगुरुशुक्राः स्वक्षेत्रस्थाः, चन्द्रे स्वोच्चगे, बलवति लग्नेशे सति जातानां = नराणां षष्टिरायुः = वर्षाणां षष्टिरायुः स्यात् ॥२॥

भाषा०—यदि अति बलवान् लग्नेश को केन्द्रस्थित शुभग्रह देखता हो तो मनुष्य दीर्घायु, शुभगुण और लक्ष्मी के सहित होता है। यदि शुभग्रह जन्म समय केन्द्र में हो, चन्द्रमा अपने उच्च में हो, लग्नेश बलवान् होकर लग्न में हो तो उस मनुष्य की आयु साठ वर्ष की होती है ॥२॥

**सौम्याः केन्द्रालयस्था वपुषि सुरगुरौ लग्नतो वा सुधांशो-**
**रायुर्युक्तं न दृष्टं न च गगनगतैः सप्ततिर्वत्सराणाम् ।**
**याता मूलत्रिकोणे शुभगगनचराः स्वीयतुङ्गे सुरेज्ये**
**लग्नाधीशेऽतिवीर्ये गगनवसुसमा तुल्यमायुर्नराणाम् ॥३॥**

लग्नाच्चन्द्राद्वा सौम्याः = पूर्णचन्द्रबुधगुरुशुक्राः केन्द्रस्थास्तत्रापि गुरौ लग्नगे तत्र गगनगतैः=दशमस्थैः क्रूरैरायुरष्टमस्थानं* दृष्टं युक्तं यदि न भवति तदा वत्सराणां सप्ततिरायुः स्यात्। शुभग्रहा मूलत्रिकोणस्थाः, गुरौ स्वोच्चगे, लग्नेशे बहुबले सति नराणां गगनवसुसङ्ख्यं = अशीतिवर्षोपलक्षितं आयुः स्यात्। एतेषु योगेषु गुणगणयुक्तमित्यनुषञ्जनीयम् ॥३॥

भाषा०—यदि लग्न से या चन्द्रमा से शुभग्रह केन्द्र में हो, तथा बृहस्पति लग्न में हों, अष्टमभाव ग्रहों से युक्त दृष्ट न हो तो मनुष्यों की ७० सत्तर वर्ष की आयु होती है। तथा शुभग्रह अपने मूल त्रिकोण में हों, बृहस्पति अपने उच्चमें हों, लग्नेश अत्यन्त बलवान हो तो उस मनुष्य की ८० वर्षकी आयु होती है। इन योगों में गुणयुक्त आयुष्य समझना चाहिये ॥

विशेष—संस्कृत टीका में 'गगनगत' का अर्थ दशमस्थ किया है, किन्तु वह असङ्गत है, क्योंकि—दशमस्थ ग्रह की अष्टम पर दृष्टि वा योग नहीं हो सकता है ॥ ३ ॥

---

* गगने गतं = गमनं येषां ते गगनगता ग्रहास्तैः इत्येवार्थः साधुः। न च दशमस्थैरिति। दशमस्थानामष्टमे दृष्टियोगाभावात्।

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


सौम्ये केन्द्रेऽतिवीर्ये यदि निधनपदं खेटहीनं समाः स्यु-
स्त्रिंशत्सौम्येक्षितं चेद् गगनहिमकरैः संयुताथो स्वभे चेत् ।
स्वत्र्यंशे चामरेज्ये मुनिनयनमितं स्वर्क्षगे लग्नगे वा
चन्द्रे द्यूने शुभश्चेद्गगनरसमितं कोणगाः सौम्यखेटाः ॥४॥

सौम्ये = बुधेऽतिबले केन्द्रस्थे सति अष्टमपदं खेटहीनं यदि तदा वर्षाणां त्रिंशदायुः स्यात् । निधनं सौम्येक्षितं चेत् गगनहिमकरैर्दशभिः संयुता त्रिंशद्वर्षाणां = चत्वारिंशदायुः स्यात् । अथ गुरौ स्वराशौ स्वद्रेष्काणे सति मुनिनयनमितं = सप्तविंशद्वर्षाणि आयुः स्यात् । चन्द्रः स्वर्क्षगो लग्नगो वा सप्तमे शुभग्रहश्चेत्तदा गगनरसमितं = षष्टिवर्षमितमायुः स्यात् । शुभग्रहाः पञ्चमनवमस्थाः, कर्कटे लग्ने सुरेज्यो यदि भवति तदा खाष्टतुल्यं = अशीतिवर्षतुल्यमायुः स्यादित्यग्रिमश्लोकेनाऽन्वयः ॥ ४ ॥

भाषा०—यदि अत्यन्त बलवान बुध केन्द्र में हो, अष्टमस्थान ग्रहवर्जित हो तो तीस ३० वर्ष की आयु होता है । यदि अष्टमभाव शुभग्रह से देखा जाता हो तो ४० चालीस वर्ष की आयु होती है । यदि बृहस्पति अपनी राशि में वा अपने द्रेष्काण में हो तो सत्ताईस ( २७ ) वर्ष की, यदि चन्द्रमा अपनी राशि में हो वा लग्न में हो और सप्तम में शुभग्रह हो तो ६० वर्ष की, यदि शुभग्रह कोण ( ५।९ ) में हो और कर्कलग्न में बृहस्पति हो तो ८० अस्सी वर्ष की आयु होती है ॥ ४ ॥

कीटे लग्ने सुरेज्यो यदि भवति तदा खाष्टतुल्यं, लयेशो
धर्मेऽङ्गे चाङ्गनाथे निधनभवनगे क्रूरदृष्टेऽब्धिहस्ताः ।
लग्नाधीशाष्टनाथौ लयभवनगतौ सप्तविंशद्विलग्ने
क्रूरेज्यौ चन्द्रदृष्टौ यदि निधनगतः कश्चनास्ते द्विपक्षाः ॥५॥

अष्टमेशो नवमे भावे, लग्नेशे क्रूरदृष्टे अष्टमगते अब्धिहस्ताश्चतुर्विंशतिरायुः स्यात् । लग्नाष्टमेशौ अष्टमस्थौ यदि तदा सप्तविंशतिवर्षाण्यायुः । क्रूरसंयुतो गुरुः चन्द्रदृष्टो लग्ने यदि अन्यः कश्चिद्ग्रहः अष्टमस्थः तदा द्विपक्षाः = द्वाविंशतिरायुः स्यात् ॥ ५ ॥

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

भाषा०—अष्टमेश यदि नवम स्थान में हो, तथा लग्नेश पापग्रह से दृष्ट निधन ( ८ ) भाव में हो तो २४ चौवीस वर्ष की आयु होती है। यदि लग्नेश और अष्टमेश-दोनों अष्टमभाव में हो तो सत्ताइस वर्ष की, तथा पापग्रह और बृहस्पति लग्न में हो और चन्द्रमा से देखा जाता हो और अष्टम भाव में कोई ग्रह हो तो २२ वर्ष की आयु होती है ॥ ५ ॥

**लग्नेन्दू क्रूरहीनौ वपुषि सुरगुरौ रन्ध्रभं खेटहीनं**
**केन्द्रे सौम्ये खशैलाः सितविबुधगुरू स्याच्छतं केन्द्रगौ चेत् ।**
**वागीशे कर्कलग्ने शतमिह भृगुजे केन्द्रगेऽथार्कसूनौ**
**धर्माङ्गस्थे सुधांशौ व्ययनवमगते हायनानां शतं स्यात् ॥ ६ ॥**

लग्नचन्द्रौ क्रूरग्रहयोगरहितौ, लग्ने गुरौ, अष्टमं ग्रहरहितं, केन्द्रे शुभग्रहे यदि तदा खशैलाः = सप्ततिः। शुक्रबृहस्पती केन्द्रगौ चेत् शतं वर्षाणि। गुरौ कर्कलग्ने भृगुजे केन्द्रगे च शतं वर्षाणि एते विशिष्टयोगा इत्यर्थः। योगस्य वैशिष्ट्यं यशःसम्पत्सूचकमिति भावः। अथ शनौ नवमगे लग्नस्थे वा चन्द्रे व्ययनवमगते वर्षाणां शतमायुः स्यात् ॥ ६ ॥

भाषा०—यदि लग्न तथा चन्द्रमा पापग्रह से रहित हो, लग्न में बृहस्पति हो, अष्टमभवन में कोई ग्रह नहीं हो, केन्द्र में शुभग्रह हो तो सत्तर वर्ष की आयु होती है। तथा यदि शुक्र और बृहस्पति केन्द्र में हो तो सौ वर्ष, एवं बृहस्पति कर्कलग्न में हो, शुक्र केन्द्र में हो तो भी सौ वर्ष, यदि शनैश्चर नवम भाव में या लग्न में हो तथा चन्द्रमा द्वादश या नवमभाव में हो तो सौ वर्ष की आयु समझे ॥ ६ ॥

**धीकेन्द्रायुर्नवस्था यदि खलखचरा नो गुरोर्भे विलग्ने**
**केन्द्रे काव्ये गुरौ वा शुभमपि निधनं सौम्यदृष्टं शतं स्यात् ।**
**लग्नादिन्दोर्न खेटा यदि निधनगता वीर्यभाजौ सितेज्यौ**
**पूर्णायुः स्वीयराशौ शुभगगनचराः षष्टिरङ्गोच्चगेऽब्जे ॥७॥**

क्रूरग्रहाः पञ्चमकेन्द्राष्टमनवमस्थाः भवेयुः, धनुर्मीने लग्ने, केन्द्रे शुक्रे गुरौ वा नवमाष्टमं च शुभग्रहावलोकितं यदि तदा शतं वर्षाण्यायुः

CC-0. Prof. Satya Vrat Shastri Collection

Digitized By Siddhanta eGangotri Gyaan Kosha


स्यात्। लग्नाचन्द्राच्च ग्रहा अष्टमस्था न स्युः शुक्रगुरू बलवन्तौ तदा पूर्णायुः व्योमार्क( १२० )वर्षायुः स्यात्। शुभग्रहाः स्वराशिस्थाः वृषे लग्ने वा चन्द्रे सति वर्षाणां षष्टिरायुः स्यात् ॥७॥

भाषा०—यदि पाँचवें स्थान में, केन्द्र में ( १।४।७।१० ), आठवें में और नवम में कोई पापग्रह नहीं हो तथा जन्मलग्न धनु अथवा मीन हो, केन्द्र में शुक्र अथवा गुरु हो, नवम अष्टम स्थान शुभग्रह से देखा जाता हो तो सौ वर्ष की आयु कहना। यदि लग्न से और चन्द्रमा से अष्टम भवन में ग्रह नहीं हो और बृहस्पति, शुक्र बलवान् हो तो पूर्णायु ( १२० ) समझना चाहिये। यदि शुभग्रह अपनी २ राशि में हो, वृष लग्न में चन्द्रमा रहै तो साठ वर्ष की आयु होती है ॥ ७ ॥

कोदण्डान्त्यार्धमङ्गं यदि सकलखगाः स्वोच्चगा ज्ञे जिनांशै-
र्गोस्थे पूर्णं च केन्द्रे सुरपतिभृगुजौ लाभगेऽब्जे परायुः।
शुक्रे मीने तनुस्थे निधनगृहगते सौम्यदृष्टे सुधांशौ
जीवे केन्द्रे शतं स्यादथ तनुगृहपे छिद्रगे पुष्करेऽब्जे ॥८॥

कोदण्डस्यान्त्यार्धलग्ने=धनुर्लग्नद्वितीयहोरायां, बुधे जिनांशैर्वृषस्थे अन्ये सर्वे ग्रहाः स्वोच्चगाः तदा पूर्णमायुः स्यात्। गुरुशुक्रौ केन्द्रे सति लाभगे चन्द्रे परायुः=पूर्णायुः। शुक्रे मीनलग्नगे, सौम्यग्रहदृष्टे, चन्द्रे अष्टमस्थे, गुरौ केन्द्रे सति वर्षाणां शतमायुः स्यात्। अथ तनुगृहपे इत्यग्रिमश्लोकेनाऽन्वयः ॥ ८ ॥

भाषा०—यदि धनु राशि की द्वितीय होरा लग्न में हो, बुध २४ अंश से वृष में हो और समस्त ग्रह अपने २ उच्च में हो तो पूर्ण आयु, अथवा बृहस्पति और शुक्र केन्द्र में हो, चन्द्रमा लाभ (११) भाव में हो तो भी पूर्णायु होती है। यदि मीन लग्न में शुक्र हो, अष्टम स्थान में चन्द्रमा शुभग्रह से देखा जाता हो, बृहस्पति केन्द्र में हो तो सौ वर्ष आयुर्दाय समझना। "तनुगृह…" इत्यादि का आगे श्लोक से सम्बन्ध है ॥८॥

वागीशे वीर्ययुक्ते नवमभवनगाः सर्वखेटाः शतायुः
कर्केऽङ्गे जीवचन्द्रौ सहजरिपुभवे सत्कविज्ञौ च केन्द्रे।

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


केन्द्रे सूर्यारमन्दा गुरुनवलवगा वाक्पतौ लग्नयाते
व्यष्टस्थानेषु शेषाः शरगजतुलितं स्यान्नराणां तदायुः ॥९॥

लग्नेशेऽष्टमस्थे चन्द्रे दशमस्थे गुरौ बलवति अन्ये ग्रहाः नवमभवनगाः तदा शतायुः। कर्के लग्ने चन्द्रजीवौ तृतीयषष्ठैकादशे शुभग्रहयुक्तौ शुक्रबुधौ च केन्द्रे यदि तदापि शतायुः। शतायुरिति देहलीदीपकन्यायेनोभयत्रान्वेति। रविभौमशनयः गुरुनवमांशस्थाः केन्द्रे स्युः, लग्नस्थे गुरौ, शेषाः अष्टमरहितभावस्थाः तदा नराणां शरगजतुलितं = पञ्चाशीतिवर्षमितमायुः स्यात् ॥ ९ ॥

भाषा०—यदि लग्नेश अष्टम भाव में, चन्द्रमा दशम भवन में हों तथा वृहस्पति बलवान हो, शेष सब ग्रह नवम भाव में हों तो सौ (१००) वर्ष की आयु होती है। कर्कलग्न हो, चन्द्रमा, वृहस्पति, तृतीय, षष्ठ, एकादश भाव में हो, बुध, शुक्र यदि केन्द्र में हो तो भी सौ वर्ष की आयु समझे। यदि रवि, मङ्गल और शनैश्चर वृहस्पति के नवांश में गत होकर केन्द्र में हो, बृहस्पति लग्न में हो, शेष सब ग्रह अष्टम भाव को छोड़कर दूसरे भाव में हों तो ८५ पचासी वर्ष की आयु होती है ॥९॥

क्रूराः सौम्यांशयाता उपचयगृहगाः कातराः कण्ठकस्थाः
सौम्या व्योमार्कसंख्या यदि तनुपकुजौ रन्ध्रगौ नो परायुः।
केन्द्रे लग्नेशजीवौ नवसुतनिधने कण्टके नो खलाख्याः
सम्पूर्णं पापखेटा यदि गुरुजलगा जीवभागे च सौम्याः ॥१०॥
युग्मर्क्षांशे गता वा व्ययधनगृहगाश्चेच्छुभाः शीतभानुः
सम्पूर्णो लग्नयायी शतमिह जनिमानिन्दिरामन्दिरं स्यात्।

शुभग्रहनवांशस्थाः क्रूराः उपचयस्थाः त्रिषट्दशमायस्थाः कातराः = भीरवः = युद्धे पराजिता इति यावत् शुभग्रहाः कण्टकस्थाः = केन्द्रस्थाः तदा व्योमार्कसंख्यं = विंशदधिकं शतं वर्षाणि आयुः = परायुः स्यात्। परायुर्योगेषु लग्नेशकुजौ अष्टमस्थौ चेत्तदा नो परायुः = परायुर्न भवतीत्यर्थः। लग्नेशगुरू केन्द्रस्थौ क्रूराश्च नवमाष्टमकेन्द्रवर्जिताश्चेत्तदा पूर्णायुः

CC-0. Prof. Satya Vrat Shastri Collection

Digitized By Siddhanta eGangotri Gyaan Kosha


स्यात् । क्रूरग्रहाः गुरुजलगाः = नवमचतुर्थगाः, शुभाः, जीवनवांशस्थाः यद्वा समराशिनवांशस्थाः सन्तः व्ययधनगृहगाः, शुभाः, पूर्णचन्द्रः लग्नस्थः इह योगे जातानां शतं वर्षाण्यायुः कथम्भूतं ? इन्दिरामन्दिरं = सम्पदा-सहितमिति अग्रिमश्लोकपूर्वार्धेन सम्बन्धः ॥ १० ॥

भाषा०—यदि पापग्रह उपचयभवन (३।६।१०।११) में होकर शुभग्रह के नवांश में हो तथा युद्ध में पराजित हो, और शुभग्रह केन्द्र में हो तो १२० वर्ष। यदि उपरोक्त परमायुयोग में लग्नेश और मङ्गल अष्टम स्थान में हों तो परमायुयोग नहीं होता है। यदि लग्नेश और बृहस्पति केन्द्र में हों तथा पापग्रह पञ्चम, अष्टम, नवम, और केन्द्र ( १।४।७।१० ) में नहीं हो तो परमायु ( १२० ) कहना। यदि पापग्रह नवम, चतुर्थ भवन में हो तथा शुभग्रह बृहस्पति के नवांश में अथवा समराशि नवांश में द्वादश अथवा द्वितीय भाव में हो तथा पूर्णचन्द्र लग्न में हो तो जातक सर्व-सम्पत्तियुक्त और १०० वर्ष की आयु वाला होता है ॥१०॥

लग्नेशे सौम्ययुक्ते वपुषि च लयपे रन्ध्रगे नाऽन्यदृष्टे
विंशत्केन्द्रे लयेशे बलवियुजि तथा लग्नपे त्रिंशदायुः ॥११॥

शुभग्रहयुक्ते लग्नेशे लग्ने अन्यग्रहैर्न दृष्टेऽष्टमेशेऽष्टमगते सति वर्षाणां विंशतिरायुः स्यात्। अष्टमेशे लग्नेशे च केन्द्रस्थे बलरहिते च सति त्रिंशद्वर्षाण्यायुः स्यात् ॥ ११ ॥

भाषा०—यदि लग्नेश शुभग्रहयुक्त लग्न में हो तथा अन्य ग्रहों की दृष्टि से रहित अष्टमेश अष्टम भवन में हो तो बीस ( २० ) वर्ष तथा बलहीन अष्टमेश और लग्नेश केन्द्र में हो तो ३० वर्ष आयु समझे ॥११॥

इन्दावापोक्लिमस्थे तदनु तनुपतौ निर्बले पापदृष्टे
दन्तैस्तुल्यं ततोऽर्कः खलखगविवरे लग्नगोऽब्जत्रिसंख्यम्।
रिःफे केन्द्रे सुरेज्ये गुरुरिपुसहजे स्यात्सपापेऽङ्गनाथे
रामाब्दं कर्कलग्ने कुजतुहिनकरौ केन्द्ररन्ध्रं ग्रहोनम् ॥१२॥

चन्द्रे आपोक्लिमस्थे = तृतीयषष्ठनवमद्वादशगते, तनुपतौ = लग्नेशे आपोक्लिमस्थे उभये निर्बले क्रूरदृष्टे च सति दन्तैस्तुल्यं = द्वात्रिंशद्वर्षाण्यायुः

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

स्यात् । क्रूरग्रहयोरन्तरे लग्नगोऽर्कश्चेत्तदाऽब्जत्रिसंख्यं = एकत्रिंशद्वर्षाण्यायुः । गुरौ द्वादशे केन्द्रे वा सपापे लग्ननाथे नवमषष्ठतृतीये सति रामाब्दं = त्रीणि वर्षाण्यायुः । कर्कलग्ने चन्द्रभौमौ, केन्द्राणि अष्टमभवनं च ग्रहरहितं यदा तदा रामाब्दं स्यादिति अग्रिमस्थेनान्वयः ॥१२॥

भाषा०—यदि बलहीन चन्द्रमा और लग्नेश पापग्रह से दृष्ट आपोक्लिम (३।६।९।१२) में हो तो ३२ बत्तीस वर्ष की आयु होती है। यदि सूर्य पापग्रहों के मध्य में होकर लग्न में हो तो एकतीस वर्ष, बृहस्पति केन्द्र में अथवा द्वादश भाव में हो तथा पापयुत लग्नेश (९।६।३) इन भावों में हो तो तीन वर्ष, यदि कर्कलग्न में चन्द्रमा और मङ्गल हो तथा केन्द्र और अष्टमभाव ग्रहरहित हो तो तीन वर्ष की आयु होती है ॥१२॥

**रामाब्दं, स्याल्लयेशे वपुषि च निधनं सौम्यहीनं खवेदा**
**लग्नेशो रन्ध्रयातो वपुषि निधनपः स्यान्नृणां बाणसंख्यम् ।**
**नक्रे तिग्मांशुमन्दौ सहजरिपुगतौ कण्टके रन्ध्रनाथे**
**पारावाराब्धिसंख्यं तदनु शुभखगाः सल्लवर्क्षेऽत्र खाग्निः ॥१३॥**

अष्टमेशे लग्नगते, अष्टमभवनं शुभग्रहरहितं खवेदाः=चत्वारिंशद्वर्षाण्यायुः स्यात् । लग्नेशेऽष्टमगेऽष्टमेशे च लग्नयाते नृणां बाणसंख्यं पञ्चवर्षाण्यायुः स्यात् । मकरस्थौ शनिरवी तृतीयषष्ठगौ, अष्टमेशे केन्द्रगे पारावाराब्धिसंख्यं = चतुश्चत्वारिंशद्वर्षाण्यायुः स्यात् । तदनु शुभग्रहाः सल्लवर्क्षे = शुभग्रहनवांशे राशौ वाऽत्र त्रिंशद्वर्षाण्यायुः स्यात् ॥१३॥

भाषा०—यदि अष्टमेश लग्न में हो, अष्टम भवन शुभग्रहरहित हो तो ४० चालीस वर्ष, तथा लग्नेश अष्टम भाव में हो अष्टमेश लग्न में हो तो जातक को पाँच वर्ष की आयु होती है। यदि शनि और सूर्य मकरमें होकर तृतीय अथवा षष्ठ भाव में हो तो ४४ चौवालीस वर्ष, यदि शुभग्रह, शुभग्रह के नवांश में अथवा राशि में हो तो तीस वर्ष की आयु समझनी चाहिये ॥

**क्रूरैर्दृष्टेऽङ्गनाथे यदि शुभविहगा वीर्यवन्तः सुधांशौ**
**संस्थे सौम्ये गणो चेद्गुणमनितमितं रन्ध्रगैर्मध्यमायुः ।**

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


स्याच्चन्द्रादह्नि पापैरथ तपनसुते द्व्यङ्गलग्ने हि याते
रिःफेशे रन्ध्रनाथे यदि बलरहिते कङ्कपत्राक्षसंख्यम् ॥१४॥

लग्नेशे क्रूरदृष्टे शुभग्रहाः बलिनः, चन्द्रे शुभवर्गगे क्वापि भावे स्थिते सति गुणमुनितुलितं = त्रिसप्ततिवर्षतुल्यमायुः स्यात्। चन्द्रादष्टमगैः पापैः दिवा जन्मनि मध्यमायुः स्यात्। अथ शनौ द्व्यङ्गे = द्विस्वभावसंज्ञके लग्ने स्थिते, द्वादशभावनाथे अष्टमनाथे च बलहीने सति कङ्कपत्राक्षिसंख्यं = पञ्चविंशतिवर्षाण्यायुः स्यात् ॥ १४ ॥

भा०—यदि लग्नेश पापग्रह से देखा जाता हो शुभग्रह बलवान हो, चन्द्रमा शुभग्रह के वर्ग में किसी भाव में हो तो ७३ तिहत्तर वर्ष, यदि चन्द्रमा से अष्टम पापग्रह हो, दिन में जन्म हो तो मध्यमायु, यदि शनैश्चर द्विस्वभाव लग्न में हो तथा द्वादशेश और अष्टमेश बलहीन हो तो पचीस वर्ष की आयु समझे ॥ १४ ॥

कर्केऽङ्गे सप्तसप्तौ खलविहगयुते पुष्करस्थे द्विजेशे
केन्द्रे याते सुरेज्ये शरविशिखमितं पुष्करे नीरगे वा।
सौम्ये पीयूषभानौ व्ययनिधनगते देहगे वा कवीज्या-
वेकर्क्षे व्योमबाणैर्व्ययरिपुनिधने लग्ननाथाढ्यचन्द्रे ॥१५॥

सूर्ये कर्कलग्ने क्रूरयुते चन्द्रे दशमगे, गुरौ केन्द्रस्थे शरविशिखमितं = पञ्चमपञ्चाशद्वर्षमितमायुः स्यात्। बुधे दशमे चतुर्थगे, वा चन्द्रे व्ययेऽष्टमे लग्ने, वा शुक्रगुरू एकराशिगौ क्वापि स्थितौ चेत्तदा व्योमबाणैः समं = पञ्चाशद्वर्षमितमायुः स्यात। लग्नेशयुक्ते चन्द्रे द्वादशषष्ठाष्टमे, लग्नेशे शन्यंशे = शनिनवांशगे भुजगशरमितं = अष्टपञ्चाशन्मितमायुः स्यादित्यग्रिमश्लोकेनान्वयः ॥ १५ ॥

भा०—यदि पापग्रहसहित सूर्य कर्क लग्न में हो तथा चन्द्रमा दशम भाव में हो, बृहस्पति केन्द्र में हो तो ५५ वर्ष, यदि बुध दशम अथवा चतुर्थ भाव में हो, चन्द्रमा द्वादश, अष्टम वा लग्न में हो, शुक्र और बृहस्पति एक राशि में किसी भाव में हो तो ५० पचास वर्ष,

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

तथा लग्नेशसहित चन्द्रमा द्वादश षष्ट वा अष्टम भाव में हो, लग्नेश शनि के नवांश में हो तो अट्ठावन वर्ष की आयु होती है ॥ १५ ॥

**शन्यंशे लग्ननाथे भुजगशरमितं, स्यादथो सौम्यखेटा**
**रन्ध्रोना देहनाथो व्ययरिपुनिधने पापयुक् षष्टिरायुः ।**
**राशीशो लग्ननाथो दिनमणिसहितो मृत्युगो वाक्पतिश्चे-**
**न्नो केन्द्रे षष्टिरायुर्वपुषि दिनपतिः शत्रुभौमान्वितश्चेत् ॥१६॥**
**वागीशे हीनवीर्ये व्ययतनुजगते यामिनीशे खशैला,**

शुभग्रहाः अष्टमव्यतिरिक्तभावस्थाः लग्नेशः पापयुक्तः त्रिकस्थस्तदा षष्टिवर्षाण्यायुः स्यात । सूर्यसहितश्चन्द्रराशीशः । लग्नेशश्च मृत्युगः गुरुः केन्द्रगो न चेत् षष्टिवर्षाण्यायुः स्यात् । निजशत्रुभौमाभ्यां युक्तः सूर्यो लग्ने, गुरौ बलहीने, चन्द्रे व्ययपञ्चमस्थे खशैलाः = सप्ततिवर्षाण्यायुः स्यादित्यग्रिमश्लोकेनान्वयः ॥ १६ ॥

भा०—यदि शुभग्रह अष्टम स्थान में नहीं हो, तथा पापग्रह सहित लग्नेश द्वादश अष्टम षष्ठ भाव में हो तो साठ वर्ष। तथा सूर्य युक्त राशीश्वर ( चन्द्रराशीश ) और लग्नेश अष्टम भाव में हों तथा बृहस्पति केन्द्र में नहीं हो तो भी साठ वर्ष, अपने शत्रु और मङ्गल के सहित सूर्य लग्न में हो, वागीश ( गुरु ) बलहीन हो, चन्द्रमा द्वादश या पञ्चम भाव में हो तो सत्तर वर्ष आयु कहना चाहिये ॥ १६ ॥

**धर्मे सर्वैः परायुः खलखगलवगैः केन्द्रयातैरशीतिः ।**
**क्रूरैः क्रूरर्क्षयातैः शुभभवनगतैः सौम्यखेटैः सवीर्यं**
**लग्नेशे स्यात्परायुः सुतभवनगतैः षष्टिरायुर्नराणाम् ॥१७॥**

सर्वैः ग्रहैः धर्मे = नवमे सद्भिः परायुः = दीर्घायुः स्यात् । खलखगलवगैः केन्द्रयातैः सर्वैरशीतिः = अशीतिवर्षाण्यायुः स्यात् । क्रूरराशिस्थैः क्रूरैः, शुभैः शुभगृहगतैः लग्नपतौ सबले परायुः स्यात् । सुतभवनगतैः सर्वैर्ग्रहैः नराणां षष्टिवर्षाण्यायुः स्यात् ॥ १७ ॥

भाषा०—यदि सब ग्रह नवमभाव में हो तो जातक दीर्घायु होता

CC-0. Prof. Satya Vrat Shastri Collection

Digitized By Siddhanta eGangotri Gyaan Kosha


है । सब ग्रह पापग्रह के नवांश में केन्द्र में हो तो अस्सी वर्ष, यदि पापग्रह पापग्रह की राशि में हो तथा शुभग्रह शुभग्रह की राशि में हो, लग्नेश बलवान् हो तो परमायु (१२० वर्ष) एवं समस्त ग्रह पञ्चम भाव में हो तो जातक की साठ वर्ष की आयु होती है ॥ १७ ॥

**सारङ्गस्यान्त्यभागे यदि वपुषि गते चाद्यभागे च केन्द्रे**
**सौम्यैः खेटैः शतं स्याद्वसुसहजसुखे स्याच्चिरायुः समस्तैः ।**
**लग्नात्प्रालेयभानोर्निधनसदनपे रिःफकेन्द्रेऽष्टविंशत्**
**केन्द्रे सौम्यग्रहोने यदि मृतिभवने कश्चिदास्ते खरामाः ॥१८॥**

धनुर्धरराश्यन्त्यनवांशे लग्नगे शुभैः प्रथमनवांशस्थैः केन्द्रगैर्वर्षाणां शतमायुः स्यात् । तृतीयचतुर्थाष्टमस्थैः सर्वैश्चिरायुः स्यात् । लग्नाचन्द्राच्च अष्टमेशे व्ययकेन्द्रस्थे अष्टाविंशतिवर्षाण्यायुः स्यात् । केन्द्रे शुभग्रहरहिते अष्टमस्थश्चेत्कश्चिद्ग्रहस्तदा खरामाः = त्रिंशद्वर्षाण्यायुः स्यात् ॥१८॥

भाषा०—यदि धनु राशि के अन्तिम नवांश में लग्न हो तथा प्रथम नवांश में शुभग्रह केन्द्र में हो तो सौ वर्ष, यदि सब ग्रह तृतीय चतुर्थ अष्टम भाव में हो तो दीर्घायु समझना । यदि लग्न से या चन्द्रमा से अष्टमेश केन्द्र में या द्वादशभाव में हो तो अट्ठाइस वर्ष, यदि केन्द्र में शुभग्रह नहीं हो तथा अष्टम भाव में कोई ग्रह हो तो ३० वर्ष की आयु होती है ॥ १८ ॥

**क्षीणे प्रालेयभानौ यदि खलखचरो मृत्युगो मृत्युनाथः**
**केन्द्रस्थो लग्ननाथो निजबलरहितः खाश्वितुल्यं तदायुः ।**
**सौम्यैरापोक्लिमस्थैर्दिनमणिजविधू वैरिरन्ध्रालयस्थौ**
**तुल्यं कामाङ्कुशैः स्यादथ धनमृतिगौ रिःफगौ पापखेटौ ॥१९॥**

चन्द्रे क्षीणे सति क्रूरग्रहोऽष्टमस्थो मृत्युभावेशः केन्द्रस्थः लग्नेशो निर्बलस्तदा खाश्वितुल्यं=विंशतिवर्षाण्यायुः स्यात् । शुभग्रहैः आपोक्लिमगतैः शनिचन्द्रौ षष्ठाष्टमस्थौ तदा कामाङ्कुशैर्नखैस्तुल्यं=विंशतिवर्षाण्यायुः स्यात् । अथेत्यग्रिमश्लोकेनान्वयः ॥ १९ ॥

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

भाषा०—यदि चन्द्रमा क्षीण हो, पापग्रह अष्टम भाव में हो, अष्टमेश केन्द्र में हो, तथा लग्नेश निर्बल हो तो बीस वर्ष। तथा शुभग्रह आपोक्लिम ( ३।६।९।१२ ) भाव में हो, शनि चन्द्रमा षष्ठ अष्टम भवन में हो तो बीस वर्ष की आयु होती है। "अथ धनमृतिगौ"—इत्यादि का आगे से सम्बन्ध है॥ १९॥

हीनौ स्वर्भानुना यदि हिममहसा व्योमनेत्रप्रमाणं
केन्द्रस्थौ सूर्यमन्दौ यदि वपुषि कुजः पुष्पबाणाङ्कुशं स्यात्।
शुक्रेज्यावङ्ग्यातौ तनयभवनगौ भौमपापावनायु-
र्जन्मेशः सार्कलग्ने खलशुभसहितश्चेक्षितः स्यादनायुः॥२०॥

अथ राहुचन्द्ररहितौ क्रूरग्रहौ द्वितीयाष्टद्वादशगौ तदा व्योमनेत्रप्रमाणं = विंशतिसंख्यमायुः। सूर्यशनी केन्द्रगौ कुजो लग्नगस्तदा पुष्पबाणांकुशं = विंशद्वर्षाण्यायुः स्यात्। शुक्रगुरू लग्नस्थौ भौमपापौ पञ्चमस्थौ तदा अनायुः = अल्पायुः स्यात्। सूर्ययुते लग्ने जन्मेशः = जन्मराशीशः अन्यैर्युतो दृष्टश्चेत्तदाऽनायुः = अल्पायुः स्यात्॥ २०॥

भाषा०—यदि राहु और चन्द्रमा से रहित, दो पापग्रह द्वितीय अष्टम तथा द्वादश भवन में हो तो बीस वर्ष, यदि सूर्य, शनि केन्द्र में हों, मङ्गल लग्न में हो तो भी बीस वर्ष, यदि शुक्र और बृहस्पति लग्न में हो, तथा मङ्गल और कोई पापग्रह पञ्चम भाव में हो तो अनायु होता है। तथा सूर्य से युत लग्न हों, और उसमें जन्मराशि का स्वामी दूसरे ग्रह से युक्त हो या देखा जाता हो तो अल्पायु होता है॥ २०॥

यत्सम्प्रोक्तं योगजं पूर्वमायुर्होरापारावारपारङ्गमज्ञैः।
तस्मादायुः सारभूतं यदेतत्पुण्याचारश्लोकभाजां नराणाम्॥२१॥

जातकशास्त्रसमुद्रोत्तीर्णैः = समस्तजातकशास्त्रज्ञैरित्यर्थः, पूर्वं यद्योगजमायुः प्रोक्तं = प्रणीतं तस्मात् = पूर्वोक्तात् सारभूतं = दृढांशभूतं आयुर्यदेतदुक्तं तत्पुण्याचारश्लोकभाजां = सदाचारोपलक्षितधर्मयशोयुक्तानां नराणां 'घटत' इत्यध्याहारः॥ २१॥

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


भाषा०—ज्योतिषशास्त्रस्वरूप समुद्र से उत्तीर्ण हुए (समस्त होराशास्त्र को जानने वाले) मुनिगण योगानुसार जो आयुर्दाय प्रथम कहे हैं उसका सारभूत यह आयुर्दाय सदाचार पालन करने वाले और धर्म यश सहित मनुष्यों को ही मिलता है, दूसरे को नहीं ॥ २१ ॥

अथादेशविधिमनुष्टुब्वृत्तेनाऽऽह—

बलाबलविवेकेन पुष्करालयशालिनाम् ।
सुमनोभिरिदं देश्यमायुधर्मादिशालिनाम् ॥ २२ ॥

बलाबलविवेकेनेति पुष्करालयशालिनां सूर्यादिग्रहाणां बलाबलविचारेण सुमनोभिरिदमायुः कथनीयं, धर्मादिशालिनां भवति पापकर्मणां न भवतीति अर्थात् सिद्धम् ॥ २२ ॥

भा०—ज्योतिषियों को चाहिये कि सूर्यादिक समस्त ग्रहों के बलाबल को विचार करके धर्म यशयुक्त जनों को ही इस आयुर्दाय को कहे अर्थात् पापकर्म से आयु की हानि होती है ॥ २२ ॥

हृद्यैः पद्यैर्गुम्फिते सूरितोषेऽलङ्काराख्ये जातके मञ्जुलेऽस्मिन् ।
आयुर्दायः श्रीगणेशेन वर्यैर्वृत्तैर्युक्तो बाहुपक्षैः प्रणीतः ॥ २३ ॥

भा०—श्रीगणेशदैवज्ञ ने इस मनोहर जातकालङ्कार ग्रन्थ में उत्तमोत्तम बाईस पद्यों से युक्त इस पञ्चम आयुर्दाय अध्याय को बनाया है २३

इति जातकालङ्कारभाषाटीकायामायुर्दायाध्यायः पञ्चमः ॥ ५ ॥

—:०:—

## भावाऽध्यायः ॥ ६ ॥

अथ लग्नेशधनेशादीनां व्यत्ययात्फलान्याह—

लग्नाधीशेऽर्थगे चेद्धनभवनपतौ लग्नयातेऽर्थवान् स्यात्
बुद्ध्याचारप्रवीणः परमसुकृतकृत्सारभृद्भोगशीलः ।
भ्रातृस्थानेऽङ्गनाथे सहजभवनपे लग्नयातेऽल्पशक्तिः
सद्बन्धू राज्यपूज्यः कुलजनसुखदो मातृपक्षेण युक्तः ॥ १ ॥

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

लग्नेशे धनगे, धनेशे लग्नके सति जातो धनवान् बुद्ध्याचारप्रवीणः =बुद्ध्याचारेण च निपुणः उत्कृष्टपुण्यकृत् बलवान् भोगैकशीलश्च स्यात्। लग्नेशे सहजे, सहजेशे लग्नस्थे अल्पवीर्यः प्रशस्तबन्धुयुक्तः, कुलजातानां सुखदः मातृपक्षेण सहितश्च स्यात् ॥ १ ॥

भाषा०—अब षष्ठाध्याय में लग्नेश धनेशादि के व्यत्यय से फल कहते हैं—यदि लग्नेश धनभाव में और धनेश लग्न में हो तो जातक धनवान्, बुद्धिमान्, आचार में निपुण, उत्कृष्ट पुण्य करने वाला, बलवान् और भोगी होता है। यदि लग्नेश सहज भाव तथा सहजेश लग्न में हो तो जातक अल्पशक्ति वाला होता है परन्तु उत्तम बन्धुओं से युक्त, राजपूज्य, अपने कुल में उत्पन्न जनों को सुख देने वाला और मातृकुल में रहने वाला होता है ॥ १ ॥

तुर्येशे लग्नयाते तदनु तनुपतौ तुर्यगे स्यात् क्षमावान्
ताताज्ञाराजकार्यप्रगुणमतियुतः सद्गुरुः स्वीयपक्षः।
लग्नस्थे सूनुनाथे तनुजपदगते लग्ननाथे मनस्वी
विद्यालङ्कारयुक्तो निजकुलविदितो ज्ञानवान्मानसक्तः ॥२॥

चतुर्थे लग्नेशे लग्नगे चतुर्थेशे जातः क्षमायुक्तः ताताज्ञाराजकार्यप्रगुणमतियुतः=पितुराज्ञायां राजकार्ये च ऋजुमतिः सन् प्रशस्तो गुरुर्यस्य यद्वा सतो गुरुः स्वकीयपक्षे च स्थितः स्यात्। पञ्चमेशे लग्ने, लग्नेशे पञ्चमस्थे सति नरः प्रशस्तमनाः विद्यया भूषितः स्वकुले विख्यातो ज्ञानवान्=सदसद्वस्तुज्ञः माने=अभिमाने सक्तः ॥ २ ॥

भाषा०—यदि लग्नेश चतुर्थ में और चतुर्थेश लग्न में हो तो जातक क्षमाशील, पिता की आज्ञा मानने वाला, राजकार्य में निष्कपट बुद्धि वाला, सज्जनों का गुरु, और अपने पक्ष ( पितृकुल ) में रहने वाला होता है। यदि लग्नेश पञ्चम भाव में हो पञ्चमेश लग्न में हो तो जातक प्रशस्त हृदय वाला ( मनस्वी ), विद्या से विभूषित, अपने कुल में विख्यात, ज्ञानवान और अभिमान सहित होता है ॥२॥

षष्ठेशे लग्नयाते तदनु तनुपतौ षष्ठगे व्याधिहीनो
नित्यं द्रोहादिसक्तो वपुषि स बलवान् द्रव्यवान् संग्रही स्यात्।

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


मूर्तीशे कामयाते मदनसदनपे मूर्तिगे तातसेवी
लोलस्वान्तोऽङ्गनायां भवति हि मनुजः सेवकः शालकस्य ॥३॥

षष्ठेशे लग्नगे तदनु लग्नेशे षष्ठगे सति नित्यं रोगरहितः अत एव शरीरे बलवान्, द्रोहादौ सक्तः आदिशब्देन परानिष्टकरणादि ज्ञेयं, संग्रहपरः अतो द्रव्यवान् स्यात्। लग्नेशे सप्तमस्थे सप्तमेशे लग्नस्थे सति तदा मनुजः पितुर्भक्तः स्त्रीविषये चञ्चलमनाः, शालकस्य भार्याभ्रातुः कार्यंकरः स्यात् ॥ ३ ॥

भा०—यदि लग्नेश षष्ठभाव में हो और षष्ठेश लग्न में हो तो सर्वदा रोग से रहित, इसलिये शरीर से बलवान्, द्रोही, धनवान्, और संग्रह करने वाला होता है। यदि लग्नेश सप्तम भाव में और सप्तमेश लग्न में हो तो जातक पिता की सेवा करने वाला, स्त्रियों में चञ्चल अन्तःकरण वाला, और अपने साले का सेवक होता है ॥ ३ ॥

अङ्गेशे रन्ध्रयाते निधनगृहपतावङ्गगे द्यूतबुद्धिः
शूरश्चौर्यादिसक्तो निधनपदमियाद्भूपतेर्लोकतो वा ।
देहाधीशे शुभस्थे शुभभवनपतौ देहसंस्थे विदेशी
धर्मासक्तो नितान्तं सुरगुरुभजने तत्परो राजमान्यः॥४॥

लग्नेशेऽष्टमगेऽष्टमेशे लग्नगे द्यूतव्यवहारे निपुणः, विक्रमवान् चौर्यादिसहितः, आदिशब्देन वञ्चनासु निपुणः, राजतो लोकतो वा निधनपदं=मरणमाप्नुयात्। लग्नेशे नवमस्थे नवमेशे लग्नस्थे सति विदेशवासी, नितान्तं धर्मे रतः देवाराधने गुरुसेवायां च तत्परः राजसत्कारभाजनं स्यात् ॥ ४ ॥

भा०—लग्नेश अष्टम भाव में हो और अष्टमेश लग्न में हो तो जातक जूआ खेलने वाला, पराक्रमी, चोरी करने में और दूसरों को ठगने में आसक्त होकर राजा से अथवा प्रजा से ही मृत्यु को पाता है। यदि लग्नेश नवम भाव में और नवमेश लग्न में हो तो मनुष्य विदेश में रहने वाला, धर्मकार्य में आसक्त, देवता और गुरु के भजन करने में अत्यन्त तत्पर और राजमान्य होता है ॥ ४ ॥

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

कर्मस्थे लग्ननाथे गगनभवनपे लग्नगे भूपतिः स्यात्
ख्यातो लाभे च रूपे गुरुभजनरतो लोलुपो द्रव्यनाथः ।
लाभेशे लग्नयाते तनुभवनपतौ लाभसंस्थे सुकर्मा
दीर्घायुः क्षोणिनाथः शुभविभवयुतः कोविदो मानवः स्यात् ॥५॥

लग्नेशे कर्मस्थे, कर्मनाथे लग्नगे भूपालः लाभेन, तद्वत्सुरूपेण च विख्यातः, गुरुसेवायां प्रीतिमान्, लोलुपः = चञ्चलचित्तः, द्रव्याणां स्वामी च स्यात् । लाभेशे लग्नस्थे, लग्नेशे लाभस्थे शोभनकर्मा, दीर्घायुः, क्षोणीनाथः = राजा, शुभविभवयुतः कोविदो = धीरश्च मानवः स्यात् ॥ ५ ॥

भा०—यदि लग्नेश दशम भाव में हो और दशमेश लग्न में हो तो जातक भूपाल ( राजा ), लाभ तथा स्वरूप में प्रख्यात, गुरुजनों की सेवा में रत, लोलुप ( चञ्चल चित्त वाला ) और द्रव्याधीश होता है। यदि लाभेश लग्न में और लग्नेश लाभ ( ११ ) भाव में हो तो जातक सुकर्म करने वाला दीर्घायु, भूपति, उत्तमसम्पत्ति से युक्त और पण्डित होता है ॥ ५ ॥

लग्नेशे रिःफयाते व्ययसदनपतौ लग्नगे सर्वशत्रु-
र्बुद्ध्या हीनो नितान्तं कृपणतरमतिर्द्रव्यनाशी विलोलः ।
इत्थं तातादिकानामपि जनुषि तथा खेचराणां हि योगा-
द्वाच्यं होरागमज्ञैस्तदनु तनुपयुग्भार्गवे राजपूज्यः ॥६॥

लग्नेशे रिःफयाते, व्ययनाथे लग्नगे सति सर्वशत्रुः = सर्वेषां जनानां शत्रुः = सर्वे शत्रवो यस्येति वा, यतो निरन्तरं बुद्ध्या हीनः = बुद्धिरहितः कृपणतरमतिः अतश्च द्रव्यनाशी विलोलः=निर्विचारः=शीघ्रकारी च स्यात् । इत्थम्=उक्तप्रकारेण जातकजन्मसमये तातादिकानामपि खेचराणां योगात् फलं होरागमज्ञैर्वक्तव्यम् । अयमर्थः—जातकस्य जन्मलग्नाद्दशमं भवनं तातगृहं तदेव लग्नं प्रकल्प्य तदग्रिमान् क्रमेण धनादिभावान् परिकल्प्य तत्र लग्नभावेशयोर्व्यत्ययस्थितिमवलोक्य लग्नाधीशेऽर्थगे चेद्धनभवनपतौ लग्नयातेऽर्थवान् स्यादित्यादिना उक्तोदाहरणेन तातादीनां अर्थवत्त्वादिफलं
CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha



होराशास्त्रज्ञैर्वाच्यम् । अथ मङ्गलाय शुभफलं आदेशं समापयति । तदनु तनुपयुक्भार्गवे=लग्नेशयुक्ते शुक्रे त्रिकव्यतिरिक्तभावग इति शेषात्तत्र जातो राजपूज्यो भवति राजपूज्यशब्देन वाञ्छितपदार्थानां सौलभ्यं ध्वन्यते ।

भा०—यदि लग्नेश द्वादश भाव में और द्वादशेश लग्न में हो तो जातक समस्त जनों का शत्रु, बुद्धिहीन, अत्यन्त कृपण बुद्धि वाला, व्यर्थ द्रव्य नाश करनेवाला, विचारहीन (किसी कार्यमें शीघ्र प्रवृत्त हो जानेवाला) होता है। जातकशास्त्र जानने वाले को चाहिये कि इसी प्रकार जन्म समय में ग्रहों के योगों से जातकके पिता माता, भ्राता, स्त्री इत्यादि के फलको कहै यथा जातक के जन्म लग्न से दशम भवन पिताका स्थान है उसी को लग्न कल्पना करके उससे अग्रिम भावों को द्वितीयादि भाव कल्पना करै और उपरोक्त (लग्नाधीशेऽर्थंगे चेत्) ""इत्यादि युक्ति से जातक के पिता का फल कहै। इसी प्रकार भ्राता आदि का भी फल कहै। यदि लग्नेश-युक्त शुक्र त्रिक (६।८।१२) भवन से अतिरिक्त (भिन्न) भाव में हो तो जातक राजपूज्य होता है ॥६॥

**एवं सुमत्या सुफलप्रबोधं श्रीजातकालङ्करणं मनोज्ञम् ।**
**वृत्तैरनन्तेशमितैर्निबद्धं मया मुदे दैवविदामुदारम् ॥७॥**

एवम्=उक्तप्रकारेण मया=गणेशेन स्वबुद्ध्या उदारं सारनिरूपणं मनोज्ञं=पदपदार्थैरुचिरं सुफलप्रबोधं=स्फुटफलजनकं दैवज्ञानां प्रमोदाय अनन्तेशमितैः=दशाधिकशतप्रमितैर्वृत्तैःश्रीजातकालङ्करणंनिबद्धं=विरचितम्

भाषा०—मैं (गणेश दैवज्ञ) ने इस प्रकार अपनी बुद्धि से दैवज्ञों के आनन्द के लिए स्पष्ट फल का ज्ञान हो जिससे ऐसा मनोज्ञ इस जातकालङ्कार को (११०) एक सौ दश श्लोक में बनाया ॥७॥

अथ स्वरचितग्रन्थस्य कविमनोरुचित्वं प्रार्थ्यते—

**पुष्करालयवशा गुणसारा जातकोक्तिरमलेव मराला ।**
**संस्कृता विहरतां भवतां मे मानसेऽतिसरले सुकवीनाम् ॥८॥**

मे=मम जातकोक्तिः भवतां=पूज्यानां कवीनां अतिसरले मानसे निर्मला मराला=हंसीव विहरताम् । कथम्भूता जातकोक्तिः ? पुष्करम्=

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


आकाशं तदेवालयो येषां ते पुष्करालयाः = ग्रहाः तेषां वशाऽधीनां = शुभाशुभसूचकग्रहोपयोऽथा इत्यर्थः। हंसीपक्षे पुष्करं = जलं तस्यालयो मानसं सरः तद्वशा तद्वर्तिनीत्यर्थः। गुणसारा = जातकगुणतां सारोपदेशोऽर्थो यस्यां सा। हंसीपक्षे गुणसारा = विहितगुणाद्यैर्युक्ता 'राजहंसास्तु ते चञ्चुचरणैर्लोहितैः सिता' इति अभिधानात्। अमला = शुद्धा = दोषरहिता इत्यर्थः। पक्षेऽमला = निर्मलेत्यर्थः। संस्कृता = मनोज्ञादिवाक्यपरिष्कृता, हंसीपक्षे निसर्गरुचिरा इत्यर्थः ॥८॥

भाषा०—ग्रन्थकार प्रार्थना करते हैं—कि पूजनीय कविजनों के अतिसरल मानस ( हृदय ) सरोवर में मेरी ग्रहोंके अधीन, शुभाशुभ फल को देनेवाली, जातकगुणों की साररूपा, संस्कृत, अत्यन्त शुद्ध यह जातकोक्ति निर्मल मराली ( हंसी ) के सदृश विहार करें ॥८॥

**हृद्यैः पद्यैर्गुम्फिते सूरितोषेऽलङ्काराख्ये जातके मञ्जुलेऽस्मिन् ।**
**भावाध्यायः श्रीगणेशेन वर्यैर्वृत्तैर्युक्तोऽष्टाभिरेष प्रणीतः ॥९॥**

अथ शालिन्या अध्यायं समापयति—हृद्यैः पद्यैरिति स्पष्टार्थः ॥९॥

इति जातकालङ्कारभाषाटीकायां षष्ठो भावाध्यायः ॥६॥

—०ꕥ०—

अथ विशिष्टं स्ववंशं संख्यापयन् ग्रन्थसमाप्तौ देशकालविशेषं प्रख्यापयति त्रिभिः पृथ्वीशार्दूलविक्रीडितैर्वृत्तैः—

**अभूदवनिमण्डले गणकमण्डलाखण्डलः**
**श्रुतिस्मृतिविहारभूर्विबुधमण्डलीमण्डनम् ।**
**प्रचण्डगुणगुर्जराधिपसभाप्रभातप्रभः**
**कवीन्द्रकुलभूषणं जगति कान्हजीकोविदः ॥१॥**

अवनिमण्डले भारद्वाजकुले नाम्ना कान्हजीकोविदः = पण्डितः अभूत्। स कीदृशः ? जगति = लोके गणकमण्डलाखण्डलो = ज्योतिर्विद्वृन्दे आचार्यः "स्युरुत्तरपदे व्याघ्र-पुङ्गवर्षभ-कुञ्जराः। सिंह-शार्दूल-नागाद्याः पुंसि श्रेष्ठार्थगोचराः" इत्यभिधानात्। श्रुतिस्मृतिविहारभूः = प्रत्यहं श्रुतिस्मृतिप्रतिपादनद्वारा तासां विहारभूमिः विबुधमण्डलीमण्डनं = पण्डित-

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha



शोभादायक इत्यर्थः । प्रचण्डगुणगुर्जराधिपसभाप्रभातप्रभः = प्रचण्डाः रिपुविजयशालिनो गुणाः सन्धिविग्रहादयो यस्य स गुर्जराधिपः = गुर्जरा देशाधिपः तस्य सभायाः = प्रभातप्रभेव सभाप्रकाशक इत्यर्थः । कवान्द्र-कुलभूषणं = कविश्रेष्ठसन्दोहस्य प्रभावहम् ॥ १ ॥

भा०—इस पृथ्वीमण्डल पर परमगुणशाली, गुर्जराधीश की सभा को प्रकाश करने वाला, विद्वन्मण्डली में अलङ्करण रूप, कविकुलभूषण, श्रुति स्मृति के आधार रूप, दैवज्ञसमूहों में श्रेष्ठ, भारद्वाज मुनि के कुल में कान्हजी नाम से प्रसिद्ध पण्डित हुए ॥ १ ॥

भारद्वाजकूले बभूव परमं तस्मात्सुतानां त्रयं
ज्यायांस्तेष्वभवद्ग्रहज्ञतिलकः श्रीसूर्यदासः सुधीः ।
श्रीमान् सर्वकलानिधिस्तदनुजो गोपालनामाभव-
च्छ्रीमद्दैवविदां वरस्तदनुजः श्रीरामकृष्णोऽभवत् ॥२॥

तस्मात् = कान्हजीकोविदात् परमं = उत्कृष्टं सुतानां त्रयं बभूव । तेषु ज्यायान् = ज्येष्ठः ग्रहज्ञतिलकः = गणकश्रेष्ठः सुधीः श्रीसूर्यदासः अभवत्तद-नुजः = ततः पश्चाज्जातः श्रीमान् वेदवित् सर्वकलानिधिः = सर्वकलाकु-शलः गोपालनामा अभवत् । तदनुजः श्रीमतां दैवज्ञानां च श्रेष्ठः श्रीराम-कृष्णोऽभवत् ॥ २ ॥

भा०—उक्त महानुभाव को तीन पुत्र हुये उन में ज्येष्ठ दैवज्ञतिलक सूर्यदास नामक, द्वितीय सर्वकलाकुशल गोपाल नामक, तथा इन के अनुज ज्यौतिषियोंमें श्रेष्ठ रामकृष्ण नामक ये तीनों अति बुद्धिमान् हुए।२॥

शाके मार्गणरामसायकधरा १५३५ संख्ये नभस्ये तथा
मासे ब्रध्नपुरे सुजातकमिदं चक्रे गणेशः सुधीः ।
छन्दोऽलङ्कृतिकाव्यनाटककलाभिज्ञः शिवाध्यापक-
स्तत्र श्रीशिवविन्मुदे गणितभूर्गोपालसूनुः स्वयम् ॥३॥

ये पठिष्यन्ति दैवज्ञास्तेषामायुःसुखे शिवम् ।
भूयात्कैरवकुन्दाभा सुकीर्तिः सर्वतो दिशम् ॥४॥

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha



तत्र गोपालसूनुः गणेशः मार्गणराजसायकधरासंख्ये शाके = पञ्चत्रिंशदधिकपञ्चदशमिते शाके नभस्ये = भाद्रपदमासे ब्रध्नपुरे = सूर्यपुरे इदं सुजातकं = शोभनं श्रीशिवाख्यविदः प्रमोदाय चक्रे = कृतवान्। कथम्भूतो गणेशः ? शिवाध्यापकः = शिवो अध्यापक उपाध्यायो यस्य। छन्दोऽलङ्कृत्यादिवित् = छन्दांसि मात्रावर्णभेदभिन्नवृत्तानि, अलङ्कृतयः = उपमाद्यलङ्काराः काव्यानि = गद्यादिभेदेन द्विविधानि, नाटकानि = संस्कृतप्राकृतभाषानिबद्धानि, कलाः = चित्रकर्माद्याः। गणितभूः = गणिताश्रयः = सिद्धान्तविदित्यर्थः ॥३-४॥

भाषा०—छन्द, अलङ्कार, काव्य, नाटक, कला ( चित्रकार्यादि ) को और सिद्धान्तगणित को जानने वाले गोपाल के पुत्र गणेश ने कवि अपने श्रीशिव नामक गुरु के प्रमोदार्थ इस जातकालङ्कार को १५३५ शाके के भाद्रपद में सूर्यपुर ग्राम में बनाया जो ज्यौतिषी इसे पढ़ेंगे उनको आयु-सुख, और कल्याण लाभ होगा तथा सर्वदिशाओं में कुन्दपुष्प सदृश ( स्वच्छ ) सुयश विस्तृत होगा ॥ ३४ ॥

**हृद्यैः पद्यैर्गुम्फिते सूरितोषेऽलङ्काराख्ये जातके मञ्जुलेऽस्मिन्।**
**वंशाध्यायः श्रीगणेशेन वृत्तैर्युक्तो वेदैः सैकसंख्यैः प्रणीतः ॥५॥**

अध्यायं पूरयति हृद्यैः पद्यैरिति स्पष्टार्थः ॥५॥

इति श्रीगणेशकविना विरचिते जातकालङ्कारे सप्तमोऽध्यायः समाप्तः ॥७॥

श्रीमच्छुक्लकुले महीयसी यशःशुक्लीकृते जातके
आसीत्कृष्णदयाभरप्रमुदितः कृष्णो जयाद्यःकृती।
तत्पुत्रेण विभावितातिरुचिरा सज्जातकालङ्कृति
श्रीरेषा हरभानुना मतिमतां मोदाय भूयाच्चिरम् ॥ १ ॥

इति श्रीमच्छुक्लोपनामकहरभानुभाविता जातकालङ्कारटीका समाप्ता।

भाषा०—मनोहर पद्यों से बने हुये इस सुन्दर जातकालङ्कार में श्रीगणेश कवि ने ५ श्लोकों से वंशाध्याय को बनाया ॥ ५ ॥

यः पुरालङ्करोति स्म कालङ्कृती, तत्कृता सत्कृता जातकालङ्कृतिः।
या स्फुटाऽप्यस्ति गूढाय गूढाशया भाषया व्याख्यया भूषिता सा मया ॥

इति चौगमानिवासिकाशीस्थसंन्यासिसंस्कृतमहाविद्यालयप्रधानाध्यापक ज्यौ० आ० पण्डितश्रीसीतारामशर्मकृतायां जातकालङ्कारभाषाटीकायां वंशाध्यायः ॥७॥
समाप्तः।

CC-0. Prof. Satya Vrat Shastri Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

## पं० श्रीसीतारामझाकृतपुस्तकानि— रु०न०पै०

अहिबलचक्र—भा०टी० .२४ केरलप्रश्नसंग्रह—भा०टी० ५२
केशवीयजातकपद्धति—सं० टी०, भा० टी० १.८०
खेटकौतुक—भा० टी० ४० गणितचन्द्रिका ६४
गर्गमनोरमा—भा० टी० २०
ग्रहलाघव—सं० टी०, भा० टी० ३.४८
गोलपरिभाषा—ज्याक्षेत्रविचारसहित २४
जातकालङ्कार—सं० टी०, भा० टी० ७२
जैमिनिसूत्र—सं० टी०, भा० टी० १.४८
ताजिकनीलकण्ठी—सं० टी०, भा० टी० ४.४८
धराचक्र—भा० टी० -३२
नाडिदत्तपञ्चविंशतिका—भा०टी० .१६ पद्मकोष—भा०टी० ४०
बृहत्पाराशरहोरा—सम्पूर्ण भा० टी०
भावप्रकाशज्यौतिष—भा०टी० १.२४ भावफलाध्याय-भा०टी० .२४
मुहूर्तचिन्तामणि—सान्वय भा० टी० ३.००
मुहूर्तमार्तण्ड—सं० टी०, भा० टी० १.४८
रेखागणित—१ से ४ अध्याय १.८० षष्ठाध्याय .४०
लग्नवाराही—भा० टी० .२०
लघुजातक—सं० टी०, भा० टी० १.४८
लघुपाराशरी—मध्यपाराशरी, सोदाहरण, भा० टी० १.३६
विवाहवृन्दावन—सं० टी०, भाषा टीका २.४८
शीघ्रबोध—भा०टी० .८० षट्पञ्चाशिका—सं०टी०,भा०टी० .६०
सारावली—भा० टी० ८.०० लीलावती—
बृहज्जातक - सं० टी०, भा० टी०
सूर्यसिद्धान्त—सं०टी०, भा०टी० बीजा

पुस्तकप्राप्तिस्थानम्—मास्टर खेलाड़ील

संस्कृत बुकडिपो, कचौड़ीगली,

89

CC-0. Prof. Satya Vrat Shastri Collection.